द्वितीयवर्णकमारचयति ॥

अवघातः कृष्णलानामस्ति नो वास्ति पाकवत् ।
मन्यसौऽन्नापाचरेत्पाकमवघाते तु नास्ति सा ॥ ३ ॥

विकृतिरूपाणां काम्येष्टीनां काण्डे पठ्यते । प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामइति । कृष्णलशब्दः सुवर्णशकलवाची । प्रकृतौ व्रीहीनवहन्तीति पुरोडाशद्रव्याणां व्रीहीणामवघातो विहितः । सोऽत्र चरुद्रव्याणां कृष्णलानां चोदकवशादस्ति नो वेति सन्देहः । अस्तीति पूर्वपक्षप्रतिज्ञा । वितुषीकरणं प्रकृतउपकारः । लुप्तेऽप्युपकारे न स्मन्नायां पाकवदिति निदर्शनम् । लुप्तेऽपि विक्लेदनोपकारे पाकः प्रतिवादिनोऽभिमतः । तद्वदवघातोऽप्यस्तु । घृते श्रपयतीति मन्यसौऽन्नापाकोऽभ्युपगतः । अवघाते तु साक्षिनास्तीति वैषम्यादवघातो नास्ति ॥ तृतीयवर्णकमारचयति ॥

वैश्वदेवस्यतन्त्रेयः पक्षे विष्णुः स किं पुरा ।
आवाह्यो वा न वाद्याद्य आग्नेयाङ्गातिदेशनात् ॥ ४ ॥
वैश्वदेवावाहनस्य काले स्यादश्लेषवर्जनात् ।
विष्णुयागस्य सन्देहाद्विष्णोरावाहनं नहि ॥ ५ ॥

काम्येष्टिष्वेवं श्रूयते । वैश्वदेवं चरुं निर्वपेद्भ्रातृव्यवानिति बर्हिषदं कृत्वा शम्यया स्फ्येन वृहेदिदमहममुं च वृहामीति यं द्विष्यात्तं ध्यायन्नधोऽवमृज्येत यत्र स्फ आम्निष्येत तद्विष्णव उरुक्रमायावद्यतीति । अस्यायमर्थः । अयं शत्रुसम्पार्थश्चरुः । तस्य प्रकृतिभूतादाग्नेयपुरोडाशाद्विशेषउच्यते । पुरोडाशशेषं यागोत्तरकाले बर्हिषदं कृत्वा पश्चात् चतुर्णामृत्विजां भक्षविभागाय हस्तेन चतुर्धा कुर्वीत ॥ ततः इदं ब्रह्मण इदं होतुरिदमध्वर्योरिदमग्नीध इति तत्तद्भागानुद्दिश्योपदिशेत् । अत्रोक्तमन्त्रान्तहस्तेनविभागः । किन्तु तीक्ष्णाग्रेण शम्यास्फ्यनामकेन यज्ञायुधद्वयेन । मन्त्रं चेदमिदमहं ब्रह्मभागं वृहामीत्येवमादिरूपं पठेदित्येतावान्विशेषः

ततो यदि कदाचिच्चरुलेशोऽवूहनकाले भूमौ पतेद्यज्ञायु-
धेन वा श्लिष्येत। तदानं पतितं श्लिष्टं चरुलेशं तीव्रपराक्र-
माय शत्रुक्षयसमर्थाय विष्णवेऽवद्येत्। अवूहनकालेऽव
दानकाले च शत्रुं क्षीणं ध्यायेदिति। तत्र वैश्वदेविकतन्त्र
मध्ये चरुलेशस्याधःपाताश्लेषणपक्षे वैष्णवयागो विहि
तः। अतो वैश्वदेविकेऽनुष्ठितान्याधारप्रयाजाज्यभागादी-
न्यङ्गानि वैष्णवेऽपि प्रसङ्गादुपकुर्वन्तीति न पृथक् क्रियन्ते।
आवाहनं त्वनुष्ठानवैषम्येण न प्रसङ्गात् सिध्यति। विश्वान्
देवानावहेति तत्रावाहनम्। अत्र तु विष्णुमावहेत् वैषम्य-
म्। सामिधेनीप्रयाजयोर्मध्यकाले होत्रा देवतावाहनार्थो
निगदः पठ्यते। सोऽयं वैश्वदेवावाहनस्य कालः। न खलु
तदानीं विष्णुः प्रसक्तः। प्रयाजाज्यभागप्रधानयागनारिष्टहो
मचतुर्धाकरणेष्वनुष्ठितेष्वश्लेषणपक्षे वैष्णवयागस्य प्रा
प्स्यमानत्वात्। अतोऽप्रसक्तोऽपि विष्णुर्भविष्यद्यागसिद्ध्यै
पूर्वस्मिन् काल आवाह्यो न वेति सन्देहः। आवाह्यः। चोदक
वशादिति प्राप्तम्। न च वैष्णवस्य वैश्वदेवप्रकृतित्वान्ना-
स्ति चोदक इति शङ्क्यम्। तयोरुभयोरप्याग्नेयविकृतित्वेनो
भयत्राप्याग्नेयाङ्गानामतिदेशात्। तस्मान्मान्यानां विप्रादी
नामनिमन्त्रणे भोजनार्थागमनादर्शनान्मान्यतमाया देव
ताया अनावाहने हविःस्वीकारस्य दूरापेतत्वादप्रसक्तोऽपि
विष्णुर्भविष्यद्यागसिध्यर्थमावाह्य इति प्राप्ते ब्रूमः। किं चतु
र्धाकरणादूर्ध्वमावाह्यते। किं वा प्रयाजेभ्यः पुरा। नाद्यः। अ
कालेकृतमकृतं स्यादिति न्यायेनावाहनस्य निरर्थकत्वा-
त्। न द्वितीयः। विष्णुयागनिमित्तस्य भविष्यदाश्लेषस्य-
पाक्षिकत्वेन नैमित्तिकस्य विष्णुयागस्यापि पाक्षिकत्वा
त्। तथा सत्ययागपक्षे कृतमावाहनमनर्थायैव स्यात्। न
हि निमन्त्रितो विप्रादिरभोजितः सन्तुष्यति। प्रत्युत शपत्येव
।एतदेवाभिप्रेत्योच्यते। देवताभ्यो वा एष आवृश्च्यते यो य

स्य इत्युक्त्वा न यजत इति। यागपक्षे तु विनाप्यावाहनं याग उपपद्यते। कृताविदनिमन्त्रितानामपि पूज्यानां स्नेहातिशयेन स्वयमेव भोक्तुमागच्छतां लोके दृष्टत्वात्। तस्मान्नास्ति विष्णोरावाहनम्॥ द्वितीयाधिकरणमारचयति॥

आरम्भणीया सोमाङ्गदीक्षणीयादिगा न वा।
अलोपादादिमोऽन्त्यः स्याद्वारभ्यद्वारलोपनात्॥६॥

दर्शपूर्णमासयोरारप्स्यमानपुरुषसंस्कारार्थमारम्भणीयेष्टिर्विधीयते। आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमान इति। सेयं सोमयागाङ्गभूतासु दीक्षणीयादिषु दर्शपूर्णमासेष्टिविकृतिषु कार्या न वेति सन्देहः। दर्शपूर्णमासेष्वङ्गभूताया आरम्भणीयायास्तासु प्रयाजादिवच्चोदकप्राप्तस्य लोपकारणाभावात् कार्यत्वादाद्यः पक्षः। किमारम्भणीयात्र क्रियमाणा सती सोमयागमारप्स्यमानस्य संस्कारः स्यात्। किंवा दीक्षणीयामारप्स्यमानस्य। नाद्यः। सोमयागस्य दर्शपूर्णमासस्य विकृतित्वाभावेन सोमयागमारप्स्यमानस्य चोदकेनारम्भणीयाया अप्राप्तत्वात्। न द्वितीयः। अङ्गानां दीक्षणीयादीनां पृथगारम्भासम्भवात्। ननु दीक्षणीयायां तन्त्रं प्रक्रमयतीति कल्पसूत्रकारैः पृथगारम्भो विहितः। मैवम्। अस्यारम्भस्य पुरुषसंस्कारेष्टिं प्रत्यप्रयोजकत्वात्। अन्यथा ततः प्रागनुष्ठितानां मृत्विग्वरणादीनामसंस्कृतपुरुषानुष्ठानप्रसज्येत। तस्माद्द्वारस्यासम्भवाद्द्वारलोपादारम्भणीया लुप्यत इत्यन्तिमः पक्षोऽभ्युपेयः॥ तृतीयाधिकरणमारचयति॥

सा किमस्त्यनुमत्यादौ न वाङ्गित्वस्य पक्रमात्।
संघस्योपक्रमो नेष्टेर्द्वारलोपान्न सा भवेत्॥७॥

अनुमत्यै पुरोडाशमष्टाकपालं निर्वपतीत्यादिना राजसूये दर्शपूर्णमासेष्टिविकृतयो विहिताः। तासु सारम्भणीयास्ति न वेति संशयः। दीक्षणीयादिवदनुमत्यादीनामन्याङ्ग-

त्वाभावात् सोमयागवत् सर्वासामङ्गित्वेनोपक्रमसम्भ-
वात् द्वारेणारम्भणीयास्तीति पूर्वपक्षः। यद्यप्यङ्गिभूता
अनुमत्यादयस्तथाप्येकैकस्याङ्गैः पृथगारम्भो नास्ति। अ
न्यथा प्रधानेष्वाग्नेयादिष्वारम्भणीयायाः पृथक्त्वेनानुष्ठा
नप्रसक्त्येन। अथोच्येत। प्रधानानां यस्मादाग्नेयादीनां स
मूहस्य दर्शपूर्णमासेष्टित्वात्तस्यैक आरम्भ इति। तर्ह्यत्रापी
ष्टिपशुसोमदर्विहोमरूपाणामनेकेषां प्रधानानां संघस्य
राजसूयत्वात् संघस्यैवोपक्रमोऽस्तु। न चास्य संघो दर्शपू-
र्णमासविकृतित्वेन तत्रारम्भणीया शङ्क्येत। अस्ति चात्र
परः सर्वारम्भार्थो यागः। अग्निष्टोममग्रे ज्योतिष्टोम माह
रतीति श्रुत्याग्निष्टोमाद्यवान्तरसंस्थाभेदरूपस्याग्निष्टोमस्या
म्नानात्। तस्मादनुमत्यादिष्विष्टिष्वारम्भद्वारस्य लोपात्
सारम्भणीया न भवेत्॥ चतुर्थाधिकरणमारचयति॥

तस्यास्ताश्चित्तवाङ्‌त्वेऽप्यस्य पृथगुपक्रमात्।
अस्ति मैत्रं चरोः सक्तेर्विधाने वा निदेशने॥ ४॥

येयमारम्भणीया सा पौष्टिकत्वाद्दर्शपूर्णमासविकृतिः। अ
तस्तस्यामपि दर्शपूर्णमासयोरिवारप्स्यमानपुरुषसंस्कारा
र्थत्वानुष्ठेयानवेति संशयः। चोदकप्राप्तत्वादनुष्ठेया। ननु
सोमाङ्गदीक्षणीयादिवदस्या दर्शपूर्णमासाङ्गत्वेनारम्भद्वा
रं लुप्यते। न वैषम्यात्। ऋत्विग्वरणादिना प्रयोगमारभ्या
नुतिष्ठतः पुरुषस्यानुष्ठानमध्ये दीक्षणीया प्रवर्त्तते। दर्शपू
र्णमासारम्भस्त्वारम्भणीयायामनुष्ठितायां पश्चात् सम्पद्यते।
ततो दर्शपूर्णमासोपक्रमादन्य आरम्भणीयोपक्रम इति द्वार
सद्भावादारम्भणीयामारप्स्यमानः स्वसंस्कारार्थमारम्भणी-
यां कुर्य्यात्। अनवस्थानुलोकसिद्धबीजाङ्कुरादिदृष्टान्तेन-
समाधेयेति प्राप्ते ब्रूमः। आरम्भणीयायामारम्भणीयान्तरं न कार्य्य
म्। कुतः। अङ्गान्तरवदतिदेष्टुमशक्यत्वात्। तथाहि। प्रकृ
तौ समिधो यजतीत्यादिवाक्यैः प्रयाजाद्यङ्गानां स्वरूपमुपदि

स्यते। प्रकरणेन चाङ्गाङ्गीभावो बोध्यते। ततः सौर्य्यं चरुं नि-
र्वपेद् ब्रह्मवर्चसकाम इत्यादिकायां विकृतौ निर्वापलिङ्गा-
नुमितं चोदकवाक्यमेव प्रवर्त्तते। इष्टित्वच्चैते प्रयाजाद्य-
ङ्गान्यनुष्ठेयानीति। एवं च सत्यारम्भणीयायामिदं वाच्यम्
। किमाग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावा-
रप्स्यमान इत्येतद्वाक्यं समिदादिवाक्यवदङ्गभूतामारम्भ-
णीयां विदधातु। किं वा यथा सौर्य्यादिवाक्यमङ्गातिदेशमनु-
मापयति। तथा दर्शपूर्णमासाङ्गभूतायामारम्भणीयायाम-
न्यस्या आरम्भणीयाया अङ्गातिदेशमनुमापयतु उतोभयं
करोत्विति। नाद्यः। अङ्गविधावुपक्षीणत्वेनातिदेशानुमाने
शक्त्यभावात्। न द्वितीयः। अविहितत्वेनातिदेष्टुमशक्यस्या-
ङ्गस्यातिदेशे शक्त्यभावात्। न तृतीयः। वाक्यभेदापत्तेः। न-
न्वनेन न्यायेन सौर्य्यवाक्येऽपि वाक्यभेदः स्यात्। एकस्यैव वा-
क्यस्य यागविध्यङ्गातिदेशयोः प्रवृत्तत्वात्। मैवम्। वाक्यद्वय-
सद्भावात्। प्रत्यक्षं वाक्यं यागविधायकम्। अनुमितं वाक्यम-
ङ्गातिदेशकम्। नह्यत्रापि तादृशं वाक्यद्वयं भवतीति चेत्।
बाढम्। अत एवारम्भणीयायां प्रयाजाद्यङ्गान्यनुष्ठीयन्ते।
तद्वदारम्भणीयान्तरमप्यङ्गमनुष्ठीयतामिति चेत्। न।
दर्शपूर्णमासप्रकरणे प्रयाजाद्यङ्गविधायकसमिदादिवाक्य-
वदारम्भणीयान्तररूपाङ्गविधायिनः कस्यचिद्वाक्यस्याभा-
वात्। न हि प्रकृतावविद्यमानमङ्गं विकृतावतिदेष्टुमर्हति
। तस्मात् सम्प्रतिपन्नस्यैवारम्भणीयाविधायिनो वाक्यस्येष्ट्य-
ङ्गस्वरूपविधानाय समिदादिवाक्यस्थानीयत्वमतिदेशा-
य सौर्य्यवाक्यस्थानीयत्वं चेत्याकारद्वयं वर्णनीयम्। तथा
सत्यावृत्तिलक्षणो वाक्यभेदः केन वार्य्यते। तस्मादारम्भणी-
यायामारप्स्यमानपुरुषसंस्कारार्थारम्भणीयान्तरं न कार्य्य-
म्॥ पञ्चमाधिकरणमारचयति ॥

यूपाहुतिः स्वले वास्यां कार्य्या नो वातिदेशतः।

काय्र्यो होमश्छेदनार्थो नाच्छेद्यायांसयुज्यते।९॥
अस्तिसाद्यस्क्रनामकः कश्चिद्यागः। सद्यस्क्रियानुक्रिया परिक्रियावास्वर्गकाम इति तद्विधानात् तत्रसाद्यस्क्राः पशवः सहपशूनालभत इतिश्रुतेः। तेषु पशुषु येद्युत्तरवेदियूपाः शास्त्रीयसंस्कारनिरपेक्षा एव गृह्यन्ते। अतएवाह्याश्वलायनः साद्यस्क्रेषूत्तरावेदिः खलेवालीयूप इति। खलेवाली वर्द्धबन्धनाय निखातामेठिः खलेवाली। तेषां च पशूनामग्नीषोमीयपशुविकृतित्वात्तदीययूपकार्य्याः पशुनियोजनादयः खलेवाल्यां क्रियन्ते। तथा प्रकृतौ यूपमाहृत्य गमिष्यतः पुरुषस्याहुतिर्विहिता। यूपमाच्छेत्स्यन् होतव्यमिति। तां चाहुतिमापस्तम्बो दर्शयति। उरुविष्णोविक्रमस्वेति स्रुवेणाहवनीये यूपाहुतिं जुहोतीति। सेयमाहुतिः खलेवाल्यां काय्र्या नवेति संशयः तद्धर्मातिदेशात् पशुनियोजनवत् काय्र्येति पूर्वः पक्षः। यूपमाच्छेत्स्यतेति वाक्यस्यायमर्थः। अपुपं खादिरादिकाष्ठविशेषं शास्त्रीयच्छेदनादिसंस्कारैर्यूपीकर्त्तुं काष्ठस्य शास्त्रीयच्छेदनयोग्यतायै होमः कर्त्तव्य इति। नहि खलेवाल्याः शास्त्रीयं छेदनमस्ति। पूर्वमेवच्छिन्नस्य काष्ठस्य कृषीवलैः खलेनिखातत्वात्। तस्माच्छेदनद्वारलोपाद्राहुतिर्नैविद्यते॥ षष्ठाधिकरणमारचयति॥

तस्यांस्थाण्वाहुतिः काय्र्या नवा स्थाणोर्विधानतः।
कर्त्तव्योपकरोत्यात्र पशोस्तां प्रकृताविव॥१०॥
यूपीयात्रश्चनस्याणुद्वारासौ यूपसंस्कृतिः।
स्वरवत्तत्सम्भवात्सेयमयूपाद्विनिवर्त्तते॥११॥
अग्नीषोमीययूपप्रकरणे स्थाण्वाहुतिं जुहोतीति श्रूयते। यूपेच्छेदकृणेसत्यवशिष्टं वृक्षमूलं काष्ठस्त्वलेनस्थाणुरित्युच्यते। तत्राहुतिविशेष एवं श्रूयते। वनस्पते शतवल्शो विरोहेत्यात्रश्चने जुहोतीति। सेयमाहुतिस्तस्यां खलेवाल्यां का

व्योनवेति संशयः। स्थाणुमुपजीव्याहुतिविधानात् स्वले
यस्यामपि स्थाणुत्वात् साकाङ्क्ष्या। नच स्वलेवाल्याः शास्त्रीय
संस्काराभावेनाहुतिर्व्यर्थेति शंक्यम् प्रयाजवदुपकारक-
त्वात्। यथाप्रकृतौ यूपाद्वियोजितस्याव्रश्चनस्थाणोरसं-
स्कार्यत्वेन पश्चादुपकारस्तद्वदिति प्राप्ते ब्रूमः आवृश्च्यते
ऽस्मादित्याव्रश्चनमवशिष्टवृक्षमूलम्। नखलु स्थाणुमात्र
माव्रश्चनमात्रं वोपजीव्येयमाहुतिः प्रवृत्ता। किंतर्हि यूप
प्रकरणवृत्तेन यूपीयाव्रश्चनस्थाणुत्वमुपजीव्य प्रवृत्ता। त
तस्तद्द्वारेणासावाहुतिर्यूपसंस्कृतिः स्यात्। तथाच दृष्टसं
स्कारे सम्भवत्यदृष्टमारादुपकारकत्वं कल्पयितुमयुक्तम्
। नच यूपवियोजितस्थाणुगतातिशयेन यूपसंस्कारो न स
म्भवति यूपसम्बन्धित्वेन तत्सम्भवात्। यथाचार्यस्य देव
दत्तस्य शिरसोऽवतारिताया अपि स्रजः शिष्येण शुचिदेशे
ऽवस्थापनम्। तत्सम्बन्धादाचार्यस्यैव संस्कारोऽवकल्प
ते तद्वत्। अतो यूपसंस्कारार्थेयमाहुतिरयूपान्तिकायाः
स्वलेवाल्या निवर्तते॥ सप्तमाधिकरणमारचयति॥

अन्त्यः प्रयाजः आरात् किमुपकार्यथ संस्कृतिः।
स्वाहाकारेति देवोक्तेर्मोतृवन्मन्त्रवर्णनात्॥११॥
आद्यामेवं चतुर्थ्यादेरभावाद्यागमात्रके।
विधिस्तयात्र सौर्यादिवद्योऽग्न्यादिनिवर्तनम्॥१२॥

दर्शपूर्णमासेष्टौ पञ्चमः प्रयाज एवमाम्नायते। स्वाहाका
रं यजतीति। स किमिष्टावारादुपकारस्य उताज्यभागादिषु
यक्ष्यमाणानामग्न्यादिदेवतानां संस्कारक इति संशयः।
तत्र स्वाहाकारं यजतीति देवताविधिरिति पूर्वपक्षाभिप्रा
यः। स्वाहाकारशब्देन देवतोच्यते। यागस्य तदाकाङ्क्ष
णात्। नच प्रत्यक्षवचनमुपेक्ष्य मन्त्रवर्णाद्देवताकल्पन
मुचितम्। नन्वेवं सति विधिमन्त्रयोर्वैयधिकरण्यप्रस
ज्येत। विधिना हि स्वाहाकाराख्यदेवता विहिता। मन्त्रेण

यक्ष्यमाणा आज्यभागादिदेवता अग्न्यादिदेवताः प्रतीय
न्ते। स्वाहाग्निं स्वाहा सोमं स्वाहा प्रजापतिं स्वाहाग्नीषोमा
वित्यादिको हि तन्मन्त्रः। नैष दोषः। मातृशब्दवन्मान्त्रवर्णि
कान्यादिशब्दानामनेकार्थत्वसम्भवात्। यथा मातृशब्दः प्र
स्थादिना धान्यस्य मानं जननीं चाचष्टे। तथाग्न्यादिशब्दाः
स्वाहाकारस्य देवतामाचक्षताम्। न च स्वाहाकारस्य देवते
न संस्क्रियतामिति वाच्यम्। संस्कृतायास्तस्या अन्यत्रोपयो
गाभावात्। तस्मादिष्टे याराादुपकारक इत्याद्यः पक्षोऽभ्युपेयः।
मैवम्। चतुर्थ्यन्तद्धितेन वा सर्वत्र देवता विधीयते। नचात्र तौ
विद्येते। किंचायं विधिर्देवतायागावुभौ विधत्ते। देवताविशि
ष्टयागं वा। देवतामात्रं वा। यागमात्रं वा। नाद्यः। वाक्यभेदापत्तेः
। न द्वितीयः। गौरवप्रसङ्गात्। न तृतीयः। अप्राप्तस्य यागस्या-
नुवाद्यत्वे सति तदनुवादेन देवताविध्ययोगात्। तस्माच्च
तुर्थः परिशिष्यते। तत्र च द्वितीयान्तः स्वाहाकारशब्दः पौ
र्णमासीं यजेत इत्यादाविव कर्मनामधेयं भविष्यति। तस्मा
दाज्यभागादिदेवतासंस्कार उत्तमः प्रयाजः। एवं च सति सौ
र्यादिविकृतिषूत्तमप्रयाजमन्त्रे प्रधानदेवतावाचकस्यादिप
दपरित्यागो बाधविचारान्तर्गतस्याधिकरणस्य फलं भविष्य
ति॥ अष्टमाधिकरणमारचयति॥

आज्यभागोय आग्नेयः किं मुख्याग्नेः स संस्कृतिः।
आरादुतोपकारी स्यात्पूर्वन्यायेन संस्कृतिः॥२४॥
निगदेऽग्नेर्द्विरुक्तत्वाद्विधावेकपदेरितः।
उपकारी ततः सोऽग्निः सौर्यादौ न निवर्तते॥२५॥

दर्शपूर्णमासयोराम्नायते। आज्यभागावग्नीषोमाभ्यां यज-
तीति। तयोः प्रथम आग्नेयः। द्वितीयः सौम्यः। तत्र सौम्यस्य ना
स्ति सन्देहः। प्रधानदेवतासु केवलस्य सोमस्याभावात्। अ
स्मिंश्च केवल आग्नेयपुरोडाशो विद्यते। तस्मादाग्नेय आ-
ज्यभागः पुरोडाशदेवताया अग्नेः किं संस्कारः उतैष आरा

दुपकारक इति संदिह्यते । तत्र प्रथमोत्तमप्रयाजो मन्त्रोक्तानां यक्ष्यमाणदेवतानां संस्कारः । तथा प्रथम आज्यभागोऽग्निमग्न आवहेति निगदोक्तस्य प्रधानयागदेवतारूपस्याग्नेः संस्कार इति पूर्वपक्षः । अत्रोच्यते । निगदस्त्वेवं पठ्यते । अग्निमग्न आवह । सोममावह । अग्निमावहेति । अस्यायमर्थः । यो आहुत्यधिकरणभूताग्ने हविर्ग्रहीण आज्यभागद्वयाष्टाकपालपुरोडाशदेवतारूपानग्निः सोमोऽग्निरित्येतांस्त्रीनिहेष्टावावहेति । तत्र पुरोडाशदेवतारूपादग्नेः प्रथमाज्यभागदेवतारूपोऽग्निरन्य इति गम्यते । अन्यथा ह्यस्याग्नेरेकस्य द्विरुक्तिर्वैयर्थ्यात् । ततः प्रथमाज्यभागइज्यमानस्याग्नेः पुरोडाशदेवतात्वाभावात् नसंस्कारकत्वमयुक्तम् । किंचाज्यभागविधावग्नीषोमाभ्यां यजतीति देवताद्वयं समस्तेनैकेन पदेनोच्यते । तत्र यथा सोमस्यायमयागे प्रतिगुणत्वं भवताऽप्युपगतम् । तथाग्नेरभ्युगन्तव्यम् । तत्र संस्कारपक्षे विरुद्धम् । संस्कारकत्वे प्राथम्यावश्यम्भावात् तस्मात् संस्कारपक्षासम्भवात् प्रथमाज्यभागो द्वितीयाज्यभागवददृष्टद्वारोपकारकः । एवं च सति सौर्ये यागेऽपि प्रथमाज्यभागेऽग्निर्ने निवर्त्तत इति बाधापवादौ विचारफलं भविष्यति ॥

नवमाधिकरणमारचयति ॥

उपकारी संस्कृतिर्वा पुरोडाशः पशूदितः ।
तद्धितोक्त्या द्वयोर्दैवमेदादुपकृतिर्मता ॥ १६ ॥
संदंशान्निश्चितेऽङ्गत्वे रक्षार्थः स्यात्संस्कृतिः ।
देवान्तरं चेद्धि कृतावग्नीषोमनिवर्त्तनम् ॥ १७ ॥

ज्योतिष्टोमाङ्गभूताग्नीषोमीयपशौ श्रूयते । अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपतीति । तत्र पशावुक्तः पुरोडाशः स किं पशोर्द्वारादुपकारक उत पशुदेवतासंस्कार इति सन्देहः । तत्राग्नीषोमीयं पशुमालभेतेति पशुविधौ तद्धितोक्ताग्नीषोमदेवता यथा गुणत्वे

न पशौ विधीयते। तथा पशुपुरोडाशेऽपि तथासति विधिभेदेन विधेयदेवताभेदात् संस्कारो न युक्तः। गुणत्वं च संस्कार्यत्वाविरोधीति पूर्वोक्तम्। तस्मात् पशोरारादुपकारक इति प्राप्ते ब्रूमः। देवताभेदवादिना तावदिदं वक्तव्यम्। पशुः पुरोडाशश्चेत्युभौ किं स्वतन्त्रौ यागौ। किं वाङ्गाङ्गिरूपौ। तत्रापि किमङ्गम् किं वाङ्गीति। तत्र पशुधर्मैरुभयतः संदष्टस्य पुरोडाशस्य स्वतन्त्राङ्गत्वे प्रकरणपाठो बाध्येत। तद्वदभिमतस्तूपकारकत्वं च न सिध्येत्। अङ्गत्वेऽपि दृष्टसम्भवाददृष्टकल्पनमन्याय्यम्। सम्भवति चात्र दृष्टम्। पुरोडाशवाक्यगतेन तद्धितान्तपदेन पशुवाक्यविहिताया देवताया अनुवादे सति तदीयस्मरणपूर्वकनिर्वापेण पशुदेवतायाः संस्क्रियमाणत्वात्। एवं च सति पशुवाक्ये गुणत्वेन प्रतीयमानाया अपि देवतायाः पुरोडाशवाक्ये प्राधान्यावगमात् संस्कार्यत्वमविरुद्धम्। तस्मात् पशुदेवतासंस्कारः पुरोडाशः। एवं च सत्यग्नीषोमीयपशुविकृतौ वायव्यपशावग्नीषोमीयदेवतायां निवृत्तायां तदीयपशुपुरोडाशोऽपि सन्निवर्तेतेति बाधः फलिष्यति ॥

दशमाधिकरणमारचयति ॥

सौर्ये चरौ चरुः स्थाली किं वान्नं लौकिकोक्तितः।
स्थाल्यस्यां श्रपणे योग्यं कपालविकृतित्वतः॥१८॥
विक्लित्तिप्रसिद्ध्यान्नं देवतातद्धितोक्तितः।
सौर्यत्वेन प्रदेयं तत्पुरोडाशहविर्यथा॥१९॥

सौर्यं चरुं निर्वपेदित्यादिवाक्ये चरुशब्दः किं स्थालीवचनमुतौदनमिति संदेहः। तत्र लौकिका आ हिमवत आ च कुमारीभ्यः सर्वेऽपि स्वस्वदेशीयभाषाप्रसिद्ध्या यत्किञ्चिदुगकारवकाराद्यक्षरमुपरि प्रक्षिप्य चरुशब्दमस्यपात्रे पाकाधिकरणे ताम्रादिमये प्रयुञ्जते। निघण्टुकाराश्चोखा स्थाली चरुरित्येतान् शब्दान् पर्यायत्वेनोपदिशन्ति। तस्माच्चरुशब्दः स्थालीवचनः। यदि तस्या अदनीयत्वाभावेन पुरोडा

शत्वात् प्रधानयोग्यता न स्यात्। तर्हि माभूत् पुरोडाशविकृ-
तित्वम्। कपालविकृतित्वं तु भविष्यति। अर्पणयोग्यतायाः स
द्भावात्। यथा कपालेषु हविः अर्प्यते। तथा स्थाल्यामपि अर्प
यितुं शक्यते। तस्माच्चरुः स्थालीति प्राप्ते ब्रूमः। अन्नमेव चरु
शब्देनोच्यते। कुतः। स्मृतिप्रसिद्धेः। आदित्यः प्रायणीयश्चरु
रिति विधाय तद्वाक्यशेषे ह्यदितिमोदनेनेत्योदनशब्देन चरु
रनूद्यते। यदि भोज्यान्ने चरुशब्दः क्वापि न प्रयुज्यते तर्ह्योदन
विशेषवाची चरुशब्दोऽस्तु। तत्र विद्वत्प्रसिद्धेः। विद्वांसो या
ज्ञिकाः शब्दैकगम्यधर्माधर्मव्यवहारिणः शब्दार्थविप्लवेना
तथ्यवन्तो नवस्रावितान्तरूष्मपक्वे जीवतण्डुले विशदसिद्ध
ओदने चरुशब्दं प्रयुञ्जते। तस्योदनत्वाच्चिते सोऽयमिति न
द्धितोऽप्युपपद्यते। यथाग्नेय इति देवतातद्धितसंयुक्तः पुरोडा
शः प्रदेयद्रव्यम्। तथा चरुरपि। अन्ये च निघण्टुकारा द
मपाके चरुः पुमानिति पठन्ति। तस्माच्चरुशब्दोऽन्नवाची॥

एकादशाधिकरणमारचयति॥

चरुः कपाले पक्तव्यः क्वापि वाउचितेऽथवा।
कपाले चोदकप्राप्तेरनूपत्वतः क्वचित्॥ २०॥
स्थाल्यां चरुत्वयोग्यत्वात्कटाहे योग्यता न हि।
चिन्ताद्यफलं त्वत्र पेषणादिनिवर्त्तनम्॥ २१॥

विषयसंशयनिर्देशकं पूर्वार्द्धं स्पष्टार्थम्। यथा प्रकृतौ पुरोडा
शस्य कपाले पाकः। तथा विकृतौ चरोरित्याद्यः पूर्वपक्षः। पु
रोडाशस्यापूपत्वात् कपालगतोष्मणा पाकः सम्भवति। चरु
स्त्वोदनत्वादुदकगतोष्मणा पक्तव्यः। अतोऽप्राकृतकार्य्यत्वा
च्चोदकप्राप्तिर्नास्तीति यदुच्येत। तर्ह्यनपूपस्य चरोरुदकधा
रणयोग्ये कटाहघटादौ यत्र क्वापि पाक इति द्वितीयः पक्षः।
निरुप्तानां मुष्टिचतुष्टयपरिमितानां तण्डुलानामल्पत्वेनैव पा
त्रेण पक्तुं योग्यत्वाच्चरोः स्थाल्यामेव पाक इति राद्धान्तः। पूर्व
त्र चरुरोदन इति विवक्षितम्। तर्ह्योदने पेषणादिरस्ति। अ

तः पेषणादिनिवृत्तिः पूर्वे चिन्तायाः साक्षात्फलम्। तद्द्वारेण चरुनिष्पादकस्यास्यां चिन्ताया अपि फलमित्युपचर्य्यते। पेषणादीन्यनुक्रामति॥

पेषणं यवनं वापस्तापश्चोपहितिः प्रथा।
मार्जनाभ्यूहनज्वालास्तथाप्युद्वासादनम्॥२२॥

पेषणं चूर्णनम्। यवनं पिष्टस्योदकमिश्रणम्। वापउदकमिश्रणाय पिष्टस्य पात्रे प्रक्षेपः। तापः कपालानामङ्गारैः प्रतापनम्। उपहितिरङ्गारेषु कपालस्थानम्। प्रथा कपालेषव- स्थापितस्य पुरोडाशस्य हस्तसंघट्टनेन सर्वेषु कपालेषु प्रसारणम्। मार्जनं श्लक्ष्णीकरणम्। अभ्यूहनं भस्मनाङ्गारैश्चोपर्य्याच्छादनम्। ज्वालादर्भपिञ्जूलैः प्रज्वालनम्। उ-द्वासादनम् कपालेभ्यः पुरोडाशं पृथक्कृत्य पात्रान्तरे स्थापनम्। ननु पेषणानिवृत्तेः पूर्वाधिकरणद्वयफलत्वे किमिति सूत्रकारः प्रत्येकं सूत्रैर्विचारितवानित्याशङ्क्य मन्दमतिसुखार्थायेत्याह॥ ॥

एतानि मन्दप्रज्ञस्य कृत्यानीति विभ्रमः।
अपूपस्येव योग्यानीत्यनतत्सूत्रैर्निरूपितम्॥२३॥

इति माधवीये जैमिनीयन्यायमालाविस्तरे दशमस्याध्यायस्य प्रथमः पादः समाप्तः॥

द्वितीयपादस्य प्रथमाधिकरणमारचयति॥

नास्त्यस्ति वा कृष्णलेषु पाकः श्रौतोऽप्यसम्भवी।
अदृष्टार्थतया सत्त्वादौष्ण्यन्तु सुतरां भवेत्॥१॥

घृते श्रपयतीति प्रत्यक्षश्रुतिविहितोऽपि पाको विक्लेदनायोग्येषु न कर्त्तव्य इति पूर्वपक्षः। दृष्टार्थस्य विक्लेदनस्यासम्भवेऽप्यदृष्टार्थं कर्त्तव्यः। अन्यथा विधिवैयर्थ्यापत्तेः। यदा तु पाकशब्द औष्ण्यवाची तदा न कोऽपि विवादः॥

द्वितीयाधिकरणमारचयति॥

उपस्तराभिघारौ स्तस्तेषु नो वा द्वयं भवेत्।
अदृष्टार्थमसंसक्तिर्दृष्टार्थो नेति लुप्यते॥२॥

तेषु कृष्णलेषूपस्तरणमभिधारणम्। चेत्युभयं पाकवद्दृ-
ष्टार्थं कार्य्यमिति पूर्वपक्षः। न तावत् पाकवदत्र प्रत्यक्षवि
धिरिति। चोदकस्तु दृष्टं द्वारमपेक्ष्यते। प्रकृतावुपस्तरणा
भिघारणयोर्दृष्टार्थत्वात् सूक्ष्माणां पुरोडाशावयवानां स्रु
चि संसक्तिं निवारयितुं तदुभयं क्रियते। कृष्णलानां तु संस
क्तिप्रसङ्ग एव नास्ति। अतस्तन्निवारणलक्षणं द्वारं नास्ति
त्युपस्तरणाभिघारणद्वयं लुप्यते॥ ॥

तृतीयाधिकरणमारचयति॥

भक्षो नास्त्यस्ति वा तेषु नास्ति प्रीतेरभावतः।
त्वक्षुषाकारनिर्धीति वचनात्स्यात्प्रदानवत्॥३॥

यथा पुरोडाशे प्राशित्रादिभागो भक्ष्यते। न तथा तेषु कृष्णलेषु भ-
क्षोऽस्ति। प्रीतिरूपस्य दृष्टद्वारस्यासम्भवादिति पूर्वपक्षः। त्वक्षुषाका
रं भक्षयन्ति निर्धयन्तो भक्षयन्तीति प्रत्यक्षवचनमाम्नायते। इ-
क्षुदण्डभक्षणे तद्रसस्वीकारे च यः शब्दविशेषस्तस्यानुकरणं त्वु
क्षुषेति। घृतेन निरन्तरेषु कृष्णलेषु यच्छिन्नमाज्यं तदन्तर्नेतुमिव बा
लास्त्वक्षुषां कृत्वा तदाज्यं निःशेषेण पिबन्तो भक्षयेयुरित्यर्थः। अ
न्तर्नीयद्रव्याणामपि कृष्णलानां यथावचनात् प्रदानं तद्वद्भक्ष्या
णामपि भक्षणं भवेत्॥ चतुर्थाधिकरणमारचयति॥

सकृत्सहत्वयोरेकमेकधेत्यन्त्यमेव वा।
एकं नियामकाभावादबाधादन्त्यमेव हि॥४॥

तत्रैव कृष्णलभक्षणे श्रूयते। एकधा ब्रह्मण उपहरतीति।
तत्रैकधेत्ययं धाप्रत्ययः प्रकारवाची सन्नेकवारमित्यमुमर्थं
वा वहतु सहभावं वा ब्रूते उपहारो भक्षणाय समर्पणम्। ए
कधेत्यनेन शब्देन सकृत्त्वसहत्वयोरन्यतरद्विवक्षितमुत-
सहत्वमेवेति संशयः। नियामकाभावादुभयोर्मध्ये यत् कि
ञ्चिदन्यतरदिति पूर्वपक्षः। अबाधोऽत्र नियामकः। प्रकृतौ

विडामाशित्वचतुर्धाकरणसंयुवाककालेषु चतुर्थाभक्षणसिद्धये चत्वार उपहारा उपदिष्टाः। अत्रापि चोदकप्राप्ताः। तत्र सकृत्त्वपक्ष उपहितास्त्रय उपहारास्तत्तत्कालविशेषाश्च बाध्येरन्। सहत्वपक्षे कालविशेषा एव बाध्यन्ते। नतु त्रय उपहाराः। तस्मादन्यपक्षरूपं सहत्वमेवैकधेत्यस्य शब्दस्यार्थः॥ पञ्चमाधिकरणमारचयति॥

सर्वेब्रह्मण इत्यत्र ब्रह्मभागस्य सर्वता।
अन्यभागस्यापि चाद्यो भागान्तरमबाधितुम्॥५॥
सर्वत्वमन्यभागीयं ब्रह्मणोऽत्र विधीयते।
स्वभागीयं चोदकाप्तं बाध्यतामन्यभक्षणम्॥६॥

कृष्णलभक्षण एवेदमपरं श्रूयते। सर्वं ब्रह्मणे परिहरतीति। परिहारः समर्पणम्। ब्रह्मसहितानामृत्विजामेकैकस्य चतुर्षु कालेषु चत्वारो भक्षभागाश्चोदकप्राप्ताः। तत्र सर्वतां किं ब्रह्मसम्बन्धिचतुर्भागविषयोतेतरसम्बन्धिभागचतुष्टयेऽपीति सन्देहः। अध्वर्युप्रभृतीनामृत्विजां येये चत्वारो भागास्तेषां बहूनामबाधनायाद्यः पक्षोऽभ्युपेयः। न चैषा वचनव्यक्तिः। ब्रह्मसम्बन्धमनूद्य सर्वत्वपरिहारयोरेकमनुवादेऽन्तर्भाव्येतरद्विधेयम्। यदि ब्रह्मणे सर्वं तत् परिहरतीति। यद्ब्रह्मणे परिहरति तत्सर्वमिति। उभयथापि विधेर्ब्रह्मभागमात्रे पर्यवसानाच्चोदकप्राप्ता अन्यभागा अबाधिता भविष्यन्तीति पूर्वपक्षः। सर्वत्वपरिहारावनूद्य ब्रह्मसम्बन्धोऽत्र विधीयते यत् परिहर्तव्यं सर्वं तद्ब्रह्मण इति वचनव्यक्तिः। तत्र ब्रह्मभागानामितरभागानां च यत् सर्वत्वं तस्य ब्रह्मसम्बन्धे सति ब्रह्मभागानां ब्रह्मसम्बन्धस्य चोदकादेव प्राप्तत्वात्तत्रानर्थको विधिरन्यभागानां ब्रह्मसम्बन्धविधाने पर्यवस्यति। तस्मादन्येषां भक्षणं बाध्यते॥

षष्ठाधिकरणमारचयति॥

युगपत्स्वस्वकालेषु तत्सर्वं भक्षयेदयम्॥

अविलम्बादादिमोऽन्यस्तत्तत्कालमबाधितुम्॥७॥
अतीताधिकरणद्वयेन युगपत् सर्वं ब्रह्मणे समर्पयेदित्यु-
क्तम्। तत्र भक्षयितुं युगपत् समर्पितस्य सर्वस्य मध्ये कि-
यदपि भक्षयित्वावशेषितस्य विलम्बे कारणाभावाद्युगप-
दित्याद्यः पक्षः प्राप्नोति। चोदकप्राप्तस्य तत्तत्कालस्याबाधो
विलम्बहेतुः। तस्मात् स्वस्वकाल इत्यन्त्यः पक्षोऽभ्युपेयः
॥ सप्तमाधिकरणमारचयति॥

चतुर्धाकृतिनिर्देशौ तद्भागेभ्यो न वाग्रिमः।
चोदकात्तौ तु बह्वर्थव्यवस्थार्थत्वतोऽत्र न॥८॥

प्रकृतौ पुरोडाशं चतुर्धाकृत्वा पश्चादिदं ब्रह्मण इत्यादिना
तत्तद्भागान्निर्दिशेत। तौ चतुर्धाकरणनिर्देशौ पूर्वोक्तप्रस्तरा-
भक्षे चोदकवशाद्विद्येते इत्यग्रिमः पक्षः प्राप्नोति। तत्र चतु-
र्धाकरणं बहूनामृत्विजां विभागार्थम्। निर्देशो भागानामस-
ाङ्कर्यार्थः। अत्र तु ब्रह्मण एकत्वात्तावुभौ न विद्येते॥
अष्टमाधिकरणमारचयति॥

ऋत्विग्दानमदृष्टार्थमानत्यै वाग्रिमः श्रुतेः।
वैरूप्यान्नियमाभावे दृष्टत्वाद्दानतेः श्रुतिः॥९॥
भृतौ च नियमादेतद्दृष्टं स्याद्धि रूपता।
वचनात्तेन सत्रेषु स्वामिनां नभृतिः क्वचित्॥१०॥

ऋत्विग्भ्यो दक्षिणां ददातीति प्रकृतौ श्रूयते। तत् किमदृ-
ष्टार्थमानत्यर्थं वेति संशयः। भृत्यान् परिक्रीय वशीकार-
आनतिः। अदृष्टार्थं तत्स्यात्। अन्नहिरण्यादीनामदृष्टार्थे
त्यागे दानशब्दस्य प्रसिद्धत्वात्। यद्यत्र दानं भृतिः स्यात्। त-
दानीमल्पाधिककर्मानुरूपेण द्रव्यं देयं स्यात्। वैरूप्यं त-
त्रेष्यते। स्वल्पकर्मणि त्रैधातवीये सहस्रं देयम्। अधि-
ककर्मण्यूनपेये खल्वासोमस्तहस्त्रमात्रं प्रदीयते। तथा
द्वादशशतादिपरिमाणनियमो मन्त्रवत्त्वनियमश्च भृतौ
नोपपद्यते। कर्मकरान्तु मत्या न्यूनाधिकभावसम्भवात्।

नस्वरजकादिभृतौ मन्त्रादर्शनाच्च। तस्मादृष्टार्थमित्यग्रिमः पक्षः प्राप्नोति। मैवम्। आनतेर्दृष्टप्रयोजनत्वात्। दानश्रुतिस्तु दृष्टार्थायां भृतावप्यस्ति। भृतिर्देयेति प्रयोगात्। परिमाणमन्त्रवत्त्वनियमादृष्टमस्तु। दृष्टस्याभावात्। वैरूप्यंतु वचनबलादभ्युपगम्यते। दक्षिणाया भृतिरूपत्वं प्रत्यक्षवेदवाक्यादप्यवगम्यते। दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयेयुरिति। तस्मादृत्विग्दानमानत्यर्थम्। एवंच सति सत्रे ऋत्विजां यजमानत्वाद्भृतिरूपा दक्षिणा न कापि देयेत्येतद्विचारफलं द्रष्टव्यम्॥

नवमाधिकरणमारचयति॥

क्रयाय प्रतिपत्त्यैवा चमसेडादिभक्षणम्।
क्रयाय पूर्ववन्मैवं यागीयस्वत्ववर्जनात्॥११॥
अक्रीतयजमानस्य भक्षसत्त्वाच्च तत्तथा।
प्रतिपत्तिःसंस्कृतित्वात्सत्रेषु न निवर्त्तते॥१२॥

अस्ति सोमे चमसभक्षः। अस्ति चेष्टौ विडाप्राशित्रादिभक्षः। तत्र भक्षेण प्रीतानामृत्विजामानतिसम्भवाद्दक्षिणान्यायेन क्रयार्थं भक्षणमिति पूर्वपक्षः। यागदेवतायै सङ्कल्पिते द्रव्ये स्वत्वमलभमानो यजमानो न क्रेतुं शक्नोति। किञ्च यजमानपञ्चमाःसम्भूयेडां भक्षयन्तीत्यक्रीतस्यापि यजमानस्य भक्षःश्रूयते। तत्साहचर्यादृत्विजामपि भक्षणं न क्रयार्थमिति गम्यते। तस्मात्प्रतिपत्त्यर्थो भक्षः। तेन क्रयार्थत्वाभावेन परिशिष्यमाणा सा प्रतिपत्तिर्यागोपयुक्तद्रव्यसंस्काररूपत्वेन सत्रेषु न बाध्यते॥ दशमाधिकरणमारचयति॥

ऋत्विजां वरणं सत्रे कार्य्यं नो वात्र सोमवत्।
कार्य्यमेवं स्वकर्म्मत्वात्क्रयार्थाभक्तुर्नोवृतिः॥१३॥

अग्निर्मे होतेत्यादिमन्त्रैः सोमे वरणमाम्नातम्। सोमवत्सत्रेऽपि तत्कार्य्यम्। अन्यथा वरणरहितानामृत्विक्त्वाभावात् सत्रं न सिध्येत्। अतस्तत्र तत्सिद्ध्यै सत्रप्रकरणे येयजमा

नास्त्यृत्विजइतिस्वतःप्रवृत्तानपि यजमानानन्यूह्यवरण साध्यमृत्विक्त्वं तेषाधानत्वमिति विदधाति। तस्मादृत्विग्वरणं सत्रे कार्यम्। मैवम्। सत्रेह्यनुष्ठातृणां सर्वेषां स्वकर्म। नहि स्वकर्मणि क्रयार्थं वरणमपेक्ष्यते। क्रयार्थे हि प्रवृत्तौ वरणम्। दानमेव क्रयार्थम्। वरणत्वदृष्टार्थमितिचेत्। मैवम्। वरणस्य भविष्यद्दानसूचनेनोत्साहजननार्थत्वात्। अन्यथा वरणकाले कश्चित् कस्मात्त्वोदक्षिणा दत्स्यतीति प्रश्नः कथं संगच्छेत। नच सत्रासिद्धिः शङ्कनीया। तत्र वक्तव्यम्। ऋत्विक्त्वं नाम किं कर्मकरत्वमुत यागकर्तृत्वमिति। आद्ये कर्मकराणां स्वामित्वाभावेन ये यजमानास्त ऋत्विज इति विरुध्येत। द्वितीये तु स्वतएव यागं कर्तुं प्रवृत्तत्वाद्वरणमन्तरेणाप्यृत्विक्त्वं सिध्यतीति। ईदृशमेवार्त्विज्यं वचनेन विधीयते। तस्माद्दानवद्वरणं सत्रे लुप्यते॥

एकादशाधिकरणमारचयति॥

क्रयः कर्त्यो नवा सत्रे निषेधात्तत्क्रीतिकल्पनम्।
नित्यानुवादे तालुप्तेन क्रयो वरणं यथा॥ १४॥

सत्कारपुरःसरमतिरहीं तेभ्याः प्रार्थना वरणम्। तत्र चिकीर्षुर्यजमानोवरणीयेभ्यो ब्राह्मणेभ्यः सोमं ब्रूयात्। तेभ्यः सोमयागेन्यापदत्वमवचनात्। सोमाभिधान प्रकारश्चात्र कल्पेदर्शितः। ज्योतिष्टोमेनाग्निष्टोमसंस्थेन रथन्तर पृष्ठेन गवां द्वादशशतदक्षिणेनाहं यक्ष्ये। नत्वात्वसुदत्तानामर्वेति। तत्रेदं यदक्षिणाद्रव्यमिश्चयेन ब्राह्मणाः स्वकीयाः कर्मविशेषेषु नियोक्तुं योग्या भवन्ति। सोऽयं क्रयः। सच प्रकृतावित्र सत्रे कार्यः। नच दक्षिणादानस्य निराकृतत्वेन देयद्रव्यनिश्चयेऽतुप्तेसति तत्साध्यः क्रयो लुप्येतेतिशङ्कनीयम्। निषेधमुपजीव्य क्रयानुष्ठानस्य कल्पयितुं शक्यत्वात्। तथाहि। नह्यत्र गौर्दीयते नवासो न हिरण्यमिति सत्रे गवादिदानं निषिध्यते। सच निषेधः सत्यां प्रसक्तौ सम्भवति। ततः सोमेदेयद्र-

ण्णां सत्रे दानप्रसक्तिरप्युपेया। सोमेन देयद्रव्याण्येवं श्रूयन्ते। गौश्चाश्वतरश्च गर्दभाश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेति। तत्र गोवासोहिरण्यानां विशेषतो निषेधेन द्रव्यान्तराणां चोदकप्राप्तानामप्यनुज्ञा प्रतीयते। ततो देयद्रव्यसद्भावात् क्रयः कार्य्य इति पूर्वपक्षः। न ह्यत्र गौर्देयेत्यनेन निषेधेन विधीयते। किन्तु पूर्वोक्तेन निर्णयेन प्राप्तस्य दानाभावोऽनूद्यते। अदक्षिणानि सत्राणीत्याहुर्ह्यत्र गौर्देयेत इतिश्रुतौ परोक्त्युपन्यासस्य प्रसिद्धिवाचकहिशब्दस्य च प्राप्तिगमकत्वात्। तस्मान्निषेधानुवादस्य कल्पकत्वाभावाद्ग्रहणवत्तदविनाभूतः क्रयोऽपि न कार्य्यः॥ द्वादशाधिकरणमारचयति॥

सत्राङ्गं स्यान्न वा पृष्ठशमनीयेऽप्यथाङ्गता।
सौत्रामण्यादिवन्नैवं त्यागादूर्ध्वे विधानतः॥ २५॥
श्रूयमाणा दक्षिणेयं पूर्वपक्षेऽत्र धर्म्मकृत्।
परिक्रयार्था सिद्धान्ते निमित्तं स्यात्समापनम्॥ २६॥

अस्ति सोमविकृतिः पृष्ठशमनीयनामको यागः। सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्निति। उदवसायेत्यनेन ल्यप्प्रत्ययेन सत्रसमाप्तेः पूर्वकालत्वं सत्रपृष्ठशमनीययोरेककर्तृकत्वञ्च प्रतीयते। तथा सत्यग्निं चित्वा सौत्रामण्या यजेत। वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत। संस्थाप्य पौर्णमासीमिन्द्राय वैमृधाय पुरोडाशमेकादशकपालं निर्वपतीत्यत्र सौत्रामण्यादीनां यथा चयनाद्यङ्गत्वम्। तथा पृष्ठशमनीयस्य सत्राङ्गता भविष्यति। अङ्गत्वे सति श्रूयमाणा सहस्रदक्षिणा सत्रेऽपि परिक्रयणार्था न भवतीत्यदृष्टार्थतामुपगम्यते। फलञ्च न कल्प्यम्। सत्रे फलेनैव फलवत्त्वसिद्धेरिति पूर्वपक्षः। उदवसानशब्दस्य त्यागवाचित्वात् सत्रत्यागादूर्ध्वं विधीयमानः कथं सत्राङ्गं भवेत्। अग्निचित्यादौ त्यागशब्दो नास्तीति वैषम्य

म्।एककर्तृकत्वपूर्वकालत्वे तु निमित्तत्वस्याप्युपपद्य ते। सत्रसमापनं निमित्तीकृत्य विधाने गृहदाहेष्टिवत् फलनैरपेक्ष्याद्विश्वजिन्न्यायेन फलं न कल्प्यम्। सत्येवमनङ्गत्वे सोमवद्दक्षिणा परिक्रयार्था। दक्षिणायाः क्रीतत्वेनालोपः पूर्वोत्तरपक्षयोः समानः। न्यायेनाप्यलोपः सिद्धान्ते विशिष्यते॥ त्रयोदशाधिकरणमारचयति॥

तत्रर्त्विजः सत्रिणः किमन्ये वा स्युर्त्विगुक्तितः।
न सत्रयष्टृभेदेऽपि क्रीतत्वादृत्विजः परे॥१७॥

यस्मिन् पृष्ठशमनीये सत्रिणामेवार्त्विज्यम्। उदवसायेति-ल्यबन्तशब्देन कर्त्रैक्यप्रतीतेरिति पूर्वपक्षः। उदवसाययजेरन्निति समभिव्याहारात् सत्रिभिः सहैकत्वं यष्टॄणां प्रतीयते न चर्त्विजो यष्टारः। यजमानेन तेषां दक्षिणया क्रीतत्वात्। तस्मादृत्विजः सत्रिभ्योऽन्ये॥ चतुर्दशाधिकरणमारचयति॥

सम्भूयैकैकशो वात्र यष्टृता यो बहूक्तितः।
द्वियागवद्बहुत्वस्याप्राप्तेरन्त्योऽस्तु सोमवत्॥१८॥

अस्मिन् पृष्ठशमनीये सत्रिणां सम्भूय यजमानत्वमुत प्रत्येकमिति संशयः। सम्भूयेत्याद्यः पक्षः प्राप्नोति। कुतः। यजेरन्निति बहुवचननिर्देशात्। एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामित्यत्रोपादेयगतद्वित्वस्य विवक्षितत्वादुभौ सम्भूय यष्टारौ। तद्वदत्रापि स्यात् मैवम्। उदवसायेत्यत्रोदवसातॄणां यद्बहुत्वं प्राप्तं तदेव ततः समानाधिकृतेन यजेरन्नित्तेनानूद्यप्राप्तो यागो विधीयते। द्वियागे तु द्वित्वमप्राप्तत्वेन विधीयत इति वैषम्यम्। ततो ग्रहं संमार्ष्टीत्यत्र ग्रहैकत्वमिवोद्देश्यगतत्वाद्यजेरन्निति बहुत्वमविवक्षितम्। एवमपीत्थं यादिशो बहुशो वा यष्टुं शक्यत्वादेकैकशो न नियम इति चेत्। न। चोदकेन तन्नियमसिद्धेः। सोमे तद्दर्शनात्। तस्मात् सत्रिणः प्रत्येकं यजेरन्नित्यन्त्यः पक्षोऽस्तु॥

पञ्चदशाधिकरणमारचयति॥

अश्वीं पृष्ठौहीं वा नृत्यै धर्मार्थं वा न निर्णयः ।
इष्टिर्न सत्त्रे धर्मार्थं सत्त्रादङ्गं बहिर्न हि ॥ १९ ॥

सारस्वतसत्त्रे कामेष्टावश्वीं पृष्ठौहीं धेनुके दत्वेति तुरगमनुष्यगोजातीयानां स्त्रीणां दक्षिणात्वेन दानं श्रुतम्। तच्चानत्यर्थम्। कुतः। इष्टेः सत्त्रत्वात्। सत्त्रत्वे तु यजमानानामेवार्त्विज्याद्दानसाध्यक्रयाभावेन तत्साध्यमानमसम्भवित्वात्। इष्टिस्तु न सत्त्रम्। तल्लक्षणाभावात्। आसीरन्नुपेयुरिति नयोरन्यतरचोदना तल्लक्षणम्। इह त्विष्टिलक्षणभूता निर्वपतिचोदनोपलभ्यते। अग्नये कामायाष्टाकपालं निर्वपतीति। इष्टौ च यजमानादृत्विजां पृथक्त्वाद्दानमर्थं दानमिति पूर्वपक्षः। धर्मार्थं दानम्। कुतः। इष्टेः स्वरूपेणासत्त्रत्वेऽपि सत्त्राङ्गत्वेन तदङ्गेऽपि विशेषव्यवस्था यजमानानामेवार्त्विज्यात्। ननु द्वादशाहः सत्त्राणां प्रकृतिः। न च तत्र कामेष्टिरस्ति। अतो न सत्त्रचोदकेनेष्टौ यजमानार्त्विज्यप्राप्तिः। इष्टिचोदकेन तत्र सर्वत्विजः प्राप्नुवन्ति। मैवम्। सत्त्रप्रयोगान्तःपातित्वेन प्रसङ्गाद्यजमानकर्तृकत्वसिद्धेः। तस्मादत्र दानमदृष्टार्थम् ॥

षोडशाधिकरणमारचयति ॥

क्रीतै धर्मो यवाद्येषु दानं स्याद्दक्षिणोक्तितः ।
क्रयार्थमेव द्वेष्यत्वे नर्त्विजो धर्मकृत्ततः ॥ २० ॥

दर्शपूर्णमासयोः श्रूयते। यदि पत्नीः संयाजयन् कपालमभिजुहुयाद्वैश्वानरं द्वादशकपालं निर्वपेत्तस्यैकहायनो गौर्दक्षिणा तां द्वेष्याय दद्यादिति। अत्र यजमानेन द्वेषणीयपुरुषे यद्दानं तत्क्रयार्थम्। दक्षिणाशब्देन व्यवहृतानां भक्तौ क्रयार्थत्वदर्शनादिति पूर्वपक्षः। न तावदृत्विजो द्वेष्यत्वं युक्तम्। ऋत्विगाचार्यौ नाभिचरितव्याविति शास्त्रात्। यस्तु द्वेष्यः पुरुषः तस्यार्त्विज्याभावेन यागे कर्म्मकरत्वाभावात् क्रयमर्हति। तस्मादिदं दानमदृष्टार्थम् ॥

सप्तदशाधिकरणमारचयति ॥

अस्थियागः किमस्थ्नां स्याज्जीवतां वास्थिशब्दतः।
अस्थ्नामेवमनर्हत्वादस्थ्यन्ते जीविनोऽस्थिताः॥२१॥

इदमाम्नायते। यदि सत्राय दीक्षितानां यजमानः प्रमीयेताथ तं दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्य योऽस्य नेदिष्ठः स्यात्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरंस्ततः संवत्सरेऽस्थीनि याजयेयुरिति। अत्र संवत्सरेऽतीते यो यागः स्तत्रास्थीन्येव कर्तॄणि। कुतः। अस्थिशब्दस्य तत्र मुख्यत्वात्। मैवम्। अचेतनानामस्थ्नां यष्टुमनर्हत्वात्। जीवतामप्यस्थितत्वादस्तु कोऽयं याग इति चेत्। न। अस्थिशब्दस्य तल्लक्षकत्वात्। स्वदस्थिमता सहपुरुषेण पूर्वं यष्टुं प्रक्रान्तत्वेन लक्ष्यलक्षकयोरस्ति सम्बन्धः। जीवतां यष्ट्वा याजयेयुरित्युक्तेर्णिजर्थभूताः के स्युः न खल्वत्रान्ये सम्भवन्ति। अस्य यागस्य सत्रत्वादिति चेत्। नहि परस्परं याजकाः सन्तु। तस्माज्जीवतामयं यागः॥ अष्टादशाधिकरणमारचयति॥

अस्थिकर्तृमते विनापञ्चकं स्याज्जपादिकम्।
नवा तच्चोदकान्कुर्युर्न कुर्वीरन्नसम्भवात्॥ २२

अस्थीनि कर्तॄणीति पूर्वाधिकरणे पूर्वपक्षिणो मतम्। तदनुसारेणाधिकरणपञ्चकं कृत्वा विचाररूपेण प्रवर्तते। प्रकृतौ यजमानस्य मन्त्रजपः केशश्मश्रुवपनं दीक्षानियमा इत्येवमादयः कर्तव्याः सन्ति। तत्पूर्ववच्चोदकप्राप्तमस्थानि कुर्युरिति पूर्वपक्षः। अचेतनानां तदसम्भवान्न कुर्वीरन्निति राद्धान्त॥ एकोनविंशाधिकरणमारचयति॥

औदुम्बरीमानमुक्स्पर्शौ नो नास्ति तद्द्वयम्।
पूर्ववन्नेति चेन्मैवमचेतनेऽपि सम्भवात्॥२३॥

प्रकृतावौदुम्बर्याः शाखाया यजमानप्रमाणत्वम्। तथा स्रुक्ग्रहस्य यजमानस्पर्शः। तावुभावचेतनानामस्थ्नां जपादिवन्न विद्येते इति पूर्वपक्षः। अचेतनैरपि दण्डेनेव मातुं स्प्रष्टुं च शक्यत्वाद्विद्येते इति राद्धान्तः॥

विंशाधिकरणमारचयति ॥

वृष्टिकामः सदो नीचैरिति कामोऽस्ति वा न वा ।
विद्यते स्वर्गवत्कामश्रवणेन नस्य लतो न हि ॥ २४ ॥

यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयादित्यत्र सदो नामकस्य मण्डपस्य नीचमानेन गुणेन वृष्टिः फलतीत्युक्तम् । तस्यां वृष्टौ कामः स्वर्गवदस्ति विद्यत इति मन्दप्रज्ञस्य पक्षः । कामस्य चेतनधर्मत्वान्नास्तीति राद्धान्तः ॥ एकविंशाधिकरणमारचयति ॥

सूक्तवाकाशासनं स्यान्नवा नित्यप्रवृत्तितः ।
स्यान्मैवं फलनिर्देशात् फलेच्छास्थ्यां न युज्यते ॥ २५ ॥

इदं द्यावापृथिवी भद्रमभूदित्यादिः सूक्तवाको होत्रा पठ्यते । तत्रैवं श्रूयते । आशास्तेऽयं यजमानोऽसौ । आयुराशास्ते सुप्रजास्त्वमाशास्त इत्यादिः । तत्र सूक्तवाकगतोऽयं यजमानाशासनप्रतिपादको मन्त्रभागः । तमस्थियज्ञे होता पठेन्नवेति संशयः । अस्थियज्ञगतायाः प्रापणीयादेरिष्टेः प्रस्तरप्रहरणमङ्गम् । तस्य नित्यत्वात्तस्मिन् विनियुक्तस्य सूक्तवाकमन्त्रस्य नित्यप्रवृत्तस्य तद्भागपाठोऽपि स्यादिति पूर्वपक्षः । यथा स्वर्गकाम इत्यत्र कामियोगेन साध्यतापत्तेः स्वर्गशब्देन फलनिर्देशः । एवमाशासनयोगादायुरादिशब्दैः फलं निर्दिश्यते । फलेच्छा चास्थ्यां न युक्ता । तस्मात्तद्भागपाठो बाध्यते ॥ द्वाविंशाधिकरणमारचयति ॥

होतृकामो भवेन्नो वा होतुर्जीवनतो भवेत् ।
यजमानेष्टमेवासौ कामयेतेन नास्त्यसौ ॥ २६ ॥

मन्त्रे तावस्ति होतृकामः । यं कामयेत वसीयान् स्यादिति तस्मै स्तरां तस्य वषट् कुर्यादित्यादिः । सोऽस्थियज्ञेऽपि निर्दिश्यताम् । कामयितुर्होतुर्जीवनस्तत्सम्भवादिति पूर्वपक्षः । यो वै कश्चन यज्ञ ऋत्विज आशिषमाशास्ते यजमानायैव तामाशिषमाशास्त इति श्रुतेर्यजमानेष्टमेव होत्रा काम

यितव्यम्।अस्थीनि त्वचेतनान्येतं न शक्नुवन्ति।तस्मादत्र-नास्ति होतृकामः॥ तदेतदधिकरणपञ्चकं जीव-नामयं यागदत्तस्मिन् सिद्धान्तपक्षो विरुद्धम्।अचेतनत्व-मुपजीव्य प्रवृत्तत्वात्।तस्मात्तत्पक्षे चोदकप्राप्तानां यथो-क्तधर्माणां नास्ति बाधः॥ त्रयोविंशाधिकरणमारचयति·

सर्वस्वारामृतेरूर्ध्वमनुज्ञातावासमाप्यताम्।
अनुज्ञातास्वाम्यभावेन प्रैषादेः समाप्यताम्॥२७॥

सर्वस्वाराख्यः क्रतुरेवं श्रूयते।मरणकामो ह्येतेन यजेत-यः कामयेतानामयः स्वर्गं लोकमियामिति तस्य च क्रतोस्तृ-तीयसवने यजमानस्याग्निप्रवेश आम्नायते।आर्भवे स्तूय-माने औदुम्बरीं दक्षिणेन देशनाहतेन वाससा परिवेष्ट्य ब्रा-ह्मणाः समापयत मे यज्ञमिति संप्रेष्य संविशतीति।तस्य सं-शयपूर्वोत्तरपक्षा विशिष्टाः॥ ॥

चतुर्विंशाधिकरणमारचयति॥

किं कार्यमत्र किं बाध्यमिति प्रश्ने तदुत्तरम्।
क्रत्वर्थमस्थिवत्कार्यं बाध्यते मृतकर्तृकम्॥२८॥

मरणादूर्ध्वं समापनीयः सर्वस्वारशेषो विषयः।तत्र बाध्या-बाध्यानध्यवसायः संशयः।अनध्यवसायस्य संशयत्वं न्या-यविद्भिर्दर्शितम्।अनवधारणत्वाविशेषादूहानध्यवसाय-योर्न संशयादर्थान्तरभाव इति विप्रतिपन्नाभावात्तस्यात्र पू-र्वपक्षः यद्वा नियामकाभावादिच्छया किमपि बाध्यमिति पू-र्वपक्षः।अस्थिकर्तृत्वपक्षे शुक्रस्पर्शादिकं क्रत्वर्थं योग्यत्वा-त्कार्यम्।मृतयजमानकर्तृकं मन्त्रजपादिकयोग्यत्वाद्-बाध्यमिति निर्णीतम्।एवमत्रापि यद्योग्यं क्रत्वर्थं तत्कार्य-म्।यदयोग्यं यजमानकर्तृकं तद्बाध्यम्॥

पंचविंशाधिकरणमारचयति॥

मृतेः प्रागायुराशीर्णः स्याद्वा नो मृतिकामनात्।
प्रागाभेवाजीवनार्थमायुराशासनं भवेत्॥२९॥

होत्रा पठितव्ये सूक्तवाके योऽयमायुराशास्त इति भागो यजमानविषयः। स किं सर्वस्वारे यजमानमरणात् पूर्वं वर्जनीयः पठितव्यो वेति संशयः। मुमूर्षोर्यजमानस्यायुर्निरपेक्षत्वे नार्थलोपाद्वर्जनीय इति पूर्वः पक्षः। आर्भवाख्यस्य पवमानस्य स्तूयमानत्वं यजमानस्य मरणकालः। ततः पूर्वं जिजीविषुत्वात् पठितव्यः॥ षड्विंशाधिकरणमारचयति॥

आत्रेयदानं तु याज्यावृती सत्रेषु नाचरेत्।
कुर्याद्वानतिलोपान्नो धर्मार्थं क्रियतां द्वयम्॥३०॥

प्रकृतौ हिरण्यमात्रेयाय ददातीति श्रुतं क्रतुयाज्यावरणं चास्ति तदुभयं सत्रेषु न कार्यं द्वारभूताया आनतेर्लुप्तत्वात् यद्यप्यात्रेयः कर्मकरेभ्यो बहिर्भूतस्तथापि तद्दानेन यजमानस्योदार्यं पश्यन्तः ऋत्विजो धनकामा आनता भवन्ति वरणस्य चानतत्वार्थत्वं ऋत्विग्वरणे प्रारम्भकालीने प्रसिद्धं तस्माद् नत्यर्थमुभयं नाचरेदिति पूर्वः पक्षः। प्रथमवरणेनैवानतिसिद्धेः कालान्तरे स्वयमङ्गीकृताया भृतेरधिकं धनं तल्लभ्यत इत्यात्रेयदानदर्शनं नानतिकरं तस्माद्दृष्टार्थमुभयं कर्तव्यम्॥ सप्तविंशाधिकरणमारचयति॥

लुप्यते पवमानेष्टौ निर्वापः क्रियतेऽथवा।
लुप्यते साधनाभावान्नेत मुख्ये न लुप्यते॥३१॥

आधानप्रकरणगतायां पवमानेष्टौ निर्वापसाधनं नास्ति। अग्निहोत्रहवणी हि प्रकृतौ निर्वापसाधनं सा चाधानकाले न सम्भवति। अग्निहोत्रस्याधानोत्तरकालीनत्वेन तद्धोमसाधनभूतायास्तस्या अपि तथात्वादिति। मैवं ब्रूमः। मुख्यो निर्वापस्तु प्रतिगुणभूताग्निहोत्रहवणी न हि गुणलोपेन मुख्यलोपमर्हति किं चाधानकाले स्वरूपेणैव विद्यमाना अग्निहोत्रहवण्याः साधनत्वं दूरापेतं ततः साधनाभावादित्यनुपन्यासः तस्मान्न निर्वापो लुप्यते॥

अष्टाविंशाधिकरणमारचयति॥

शरावैः सप्तदशभिर्यश्चरुस्तत्र मुष्टयः ।
चत्वारः सन्ति नो वा न स्यादेकं मुष्टिसंख्ययोः ॥ ३२ ॥
नास्ति माद्यश्चोदितत्वाच्छरावापूरणान्नमः ।
द्वितीयोऽस्तीति चेन्मैवं द्विलोपे बाधगौरवात् ॥ ३३ ॥
तृतीयोऽस्त्वेकलोपात्तद्धर्मः संख्यैव लुप्यताम् ।
क्रियायोगान्न तद्धर्मः साधम्यात्सानुगृह्यताम् ॥ ३४ ॥

प्रकृतौ चतुरो मुष्टीन्निर्वपतीति मुष्टितत्संख्ये श्रूयेते तथावा
जपेये विकृतिरूपः सप्तदशशरावश्चरुः श्रुतः तत्र चरुः मुष्टि
संख्ये द्वे अपि विद्येते किं वापि न विद्येते उताभयोरेकमस्त्य
न्यन्नास्ति यद्येकं तदापि किं मुष्टिरेव किं संख्यैवेति संशयः।
चोदकप्राप्तेरुभयमस्तीत्याद्यः पक्षः। मा प्राप्तेति चतुर्भिर्मुष्टिभिः
सप्तदशशरावपूरणसमर्थस्य चरोरनिष्पत्तेः सपक्षो न युक्त
स्तर्हि मुष्टिसंख्ये द्वे अपि बाध्येते इति द्वितीयः पक्षोऽस्त्विति चे
न्मैवम्। एकतरबाधेनैव पूरणाभावपरिहारे सिद्धे सति द्व
योर्बाधे गौरवप्रसङ्गात्। नन्वत्रोपदिष्टेन शरावद्रव्येणाति
दिष्टं मुष्टिद्रव्यं बाध्यते तथा सप्तदशसंख्यया चतुःसंख्या
बाध्यत इत्युभयबाधोऽवश्यम्भावी मैवम्। भिन्नविषयत्वे
न बाधासम्भवात् शरावसप्तदशसंख्ये यागसम्बद्धे मुष्टिच
तुःसंख्ये तु निर्वापसम्बद्धे इति विषयभेदः। कथं तर्ह्यत्र बाधप्र
सङ्गः अन्यथानुपपत्त्यैवेति वदामः। अनुपपत्तिश्च पूरणा
सम्भवे दर्शिता पूरणं चैकबाधेनाप्युपपद्यते मुष्टिबाधे यथो
चितं चतुःसंख्योपेतैः कुडवादिभिः पूर्त्तिः स्यात् चतुःसंख्याबा
धे यथोचितमधिकसंख्योपेतैर्मुष्टिभिः पूर्त्तिर्भविष्यति। एवं
तर्ह्येकलोप इति तृतीयः पक्षोऽस्तु तत्र संख्याधर्मो मुष्टिध
र्मः तथा सति मुष्टौ लुप्ते सति। निराश्रयस्य धर्मस्यासिद्धेः सं
ख्यालोपोऽप्यवश्यम्भावी संख्यायां तु लुप्तायां मुष्टिः शक्तो
प्यवस्थातुं तस्मात् संख्यैव लुप्यतामिति प्राप्ते ब्रूमः। चतुःसं
ख्या तावन्न मुष्टिनान्वेति। कर्मकारकवाचि द्वितीयाविभ

त्पन्नस्य चतुरशब्दस्य सकर्मकेण निर्वपति धातुना साक्षाद
न्वयात् अतस्तत्संख्या नमुष्टिधर्मः । पाक्षिकान्वयेन तु मु
ष्टिविशेषणं भविष्यति । संख्यामुष्ट्योः क्रियासम्बन्धसमानेऽ
प्यपि प्रथमश्रुतत्वात् मानुगृह्यते । चरमश्रुतत्वेन दुर्बलोऽमु
ष्टिर्बाध्यत इति राद्धान्तः ॥ एकोनत्रिंशाधिकरणमारचयति ॥

धेनुवत्सर्षभाश्छागेया विवा गुणकीर्त्तनात् ।
अजेति दिष्टसुमेवं गोजात्येकगुणोक्तितः ॥ ३५ ॥

पशुविकृतिषु श्रूयते द्यावापृथिव्यां धेनुमालभेत मारुतं
वत्सं सैन्द्रमृषभमिति तत्र धेनुशब्दो नवसूतिकामाचष्टे व
त्सशब्दो बालं वृषभशब्दः पुमांसं तथा सति गुणवाचिन ए
ते शब्दाः अतिदिष्टमजद्रव्यमबाधित्वा तदेव द्रव्यं यथोक्तगु
णविशिष्टं वदन्ति गौस्तु न प्रत्यक्षमिह श्रूयते नाप्यतिदिश्य
ते । प्रकृतावनुपदिष्टत्वात् । अतो गां न विशिषन्तीति । पूर्वः
पक्षः । न खल्वेते यथोक्तगुणसामान्यवाचिनः किंतर्हि गो
गतानेव तान् गुणानाहुरतस्ते शब्दाः अजेऽनुपपन्नाः स
न्तोऽनुपदिष्टमनतिदिष्टमपि गां मुख्यवृत्त्या विशिंषन्तश्छागं बाध
न्त इति राद्धान्तः ॥ त्रिंशाधिकरणमारचयति ॥

वायव्यश्वेतमित्यत्र यः कोऽपिच्छाग एव वा ।
विशेषानुक्तितः कोऽपिच्छाग एवास्त्वबाधनात् ॥ ३६ ॥

वायव्यं श्वेतमालभेत भूतिकाम इति अत्र श्वेतशब्दस्य धे
न्वादिशब्दवज्जातिविशेषवाचित्वाभावाद्यः कश्चिदपि प
शुः श्वेतगुणकः समर्पयतीति पूर्वपक्षः । चोदकप्राप्तस्याज
स्य बाधकारणाभावात्तमेव समर्पयतीति राद्धान्तः ॥

एकत्रिंशाधिकरणमारचयति ॥

खलेवालीतण्डुलयोः स्वादिरश्रेदतानवा ।
यूपोक्तेर्मुख्यवृत्त्यर्थसुदृशान् स्वादिरीदृशा ॥ ३७ ॥
अवघाताद्यबाधार्थं श्रेदतातण्डुलेष्वपि ।
प्रत्यक्षवचनत्वार्थे कार्यं यूपेन लक्ष्यताम् ॥ ३८ ॥

अन्तरेण हविर्दैवयोगान्नात्रातिदेशनम् ।
नयितुं शक्यतेऽतः खादिरव्रैहितानयोः ॥ ३९ ॥

खलेवाली यूपो भवतीति साद्यस्क्रे श्रुतं तथा दधिघृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यमिति चित्रायागे श्रुतं तत्र प्रकृतौ यद्यूपस्य खादिरत्वं यच्च तण्डुलानां व्रीहिसम्बन्धित्वं तदुभयमनयोर्विकृत्योरस्ति न वेति संशयः । तत्र या खलेवाली सा यूपो भवतीत्येवमुद्देश्यविधेयभावे यूपशब्दस्य मुख्यवृत्तिर्न सिध्येत् यूपाकृतिशास्त्रीयतक्षणादिरहितायाः खलेवाल्या यूपशब्दवाच्यत्वासम्भवात् ततो यूपशब्देन यूपकार्यं पशुनियोजनादिकं लक्षणीयं स्यात् यो यूपः स खलेवालीत्येवमुद्देश्यविधेयभावे तु संस्कृतस्य खादिरयूपस्य खलेमेढित्वेन स्थापयितुं शक्यत्वान्न कस्यापि शब्दस्य लक्षणावृत्तिः तस्मादस्ति खलेवाल्याः खादिरत्वं तथा चोदकप्राप्तत्वधानात्ववाध्यर्थेव तण्डुलेष्वपि व्रैहित्वमस्तीति पूर्वपक्षः यूपमुद्दिश्य खलेवालीत्वविधाने यूपशब्दव्यवहितयोः खलेवालीभवतिशब्दयोरश्रुतस्य वैरन्तर्यपाठस्य कल्प्यत्वेन वाक्यं पराहस्यात् ततः प्रत्यक्षवाक्यपरित्यागाद्वरं यूपशब्दस्य मुख्यवृत्तिमात्रहानं तथा सति खलेवाल्या पशुनियोजनादिकं कार्यमिति वाक्यार्थः सम्पद्यते तत्र कुतो यूपः कुतस्तरां तदीयं खादिरत्वं तथा तण्डुलानां पेषणसवनादिरहितानामेव प्रजापतिदेवतासम्बन्धः श्रूयते प्रकृतौ तु पेषणादिपरम्परया निष्पन्नस्य तण्डुलकार्यस्य पुरोडाशस्य हविषो देवतासम्बन्धः । अतो समानत्वान्नात्र चोदकातिदेशः । तथा सति खादिरत्वव्रैहित्वनियमाभावाद्या काचित् खलेवाली तण्डुलाश्च येकेचित्सन्त्विति राद्धान्तः ॥ द्वात्रिंशाधिकरणमारचयति ॥

खलेवाल्यां जोषणाद्यं छेदनतक्षणाद्वयी ।
स्युर्वा नो चोदकात्स्युर्नो वैयर्थ्याद्वा विरोधतः ॥ ४० ॥

जोषणं प्रीतिपूर्वकं यूपीयवृक्षस्य लक्षणलक्षितं तया सेव्य

त्वनिश्चयः तक्षणादीनि चापरत्वेनोक्तानि समञ्जनमष्टाश्रित्वं दृढ्पर्णशाखमप्रतिशुष्काग्रमसुषिरमित्यादीनि खलेवाल्यां चोदकप्राप्ता अपि जोषणादयो न कर्त्तव्याः। कुतो वैय्यर्थ्यात् पूर्वसिद्धाया एव खलेवाल्या यूपकार्ये विनियोगमात्रेण शास्त्रार्थस्य कृतत्वादन्यत्जोषणादिकं कृतमप्यनर्थकम्। अपिच तक्षणादीनि यूपत्वसम्पादकानि खलेवाली तु न यूपः किन्त्वयूपे केवलं यूपकार्य्यमतिदिश्यते। तस्मात्तक्षणादीनि तत्र न कर्त्तव्यानि किञ्च यथा वृक्षस्य छेदनादिना वृक्षत्वमपैति तथा खलेवालीत्वमेवापेयात् नहि वरघाताय कन्योद्वाहः। जोषणस्य तु वृक्षत्वदशायां कृतत्वस्य तत्खलेवालीत्वदशायां प्राप्तिरस्ति तस्माज्जोषणादयो न सन्ति॥

त्रयस्त्रिंशाधिकरणमारचयति॥

पर्य्यूहणाद्यञ्जनादि न स्यात् स्याद्वात्र पूर्ववत्।
तस्यादृष्टाद्दृष्टभावादविरोधाच्च तद्भवेत्॥४१॥

सन्ति प्रकृतौ पर्य्यूहणादयस्तथा च कल्पसूत्रकारः अग्रेण वनिष्ठास्त्रवनिमिति प्रदक्षिणं पांशुभिः पर्य्यूहत्यग्ने दृ७ हस्वत्रेदृ७ हेति मैत्रावरुणदण्डेन सभूमिपरिवृंहणं कृत्वा तम्भ्यय पृथिवीमित्यद्भिः परिषिञ्चतीति अस्तिचाञ्जनप्रोक्षणादि तदेतदुभयविधमत्र खलेवाल्यां नास्ति अयूपत्वेन छेदनादिवत्तन्निवृत्तेरिति पूर्वः पक्षः न तावदुभयं छेदनादिवद्व्यर्थं वलीवर्दादिभिश्चालितस्य मेढेः पर्य्यूहणादिभिर्दृढीकरणस्य दृष्टप्रयोजनस्य सम्भवात् अञ्जनादिकं प्रकृतावदृष्टार्थं न चैते नोभयेन खलेवालित्वमुपैति तस्मादयूपत्वेपि सार्थकमविरुद्धञ्च तद्भवेत्॥ ॥

चतुस्त्रिंशाधिकरणं भाष्यकारमतेनारचयति॥

नावघातोऽवघातो वा धानानां तावितुष्टये।
न ताभ्यः क्रमबाधेनोवघातो नात्र बाध्यते॥४२॥

महापितृयज्ञे हविः किञ्चिच्छ्रूयते पितृभ्यो बर्हिषद्भ्यो धा

त्वादिति धानाशब्देन भृष्टं धान्यमभिधीयते तस्यां धानामव घाते सति सक्तुभावापत्तेर्धानात्वमेव विनश्येत् तस्मात्तासाम विनाशाय नास्त्यवघात इति पूर्वः पक्षः धाना अवहन्तव्या इति स्यत्र चोदकवाक्यं तस्मिंश्च वाक्ये भर्जनसम्पादितं धानात्वं पूर्वभावि पश्चाद्भावी त्ववघात इति क्रमः प्रतीयते तं क्रमं बाधित्वा प्रथमतोऽवघाते सति नास्ति धानात्वनाशः अवघातस्य पदार्थस्य बाधाद्वरं तद्गतस्य क्रममात्रस्य बाधनं तस्मादवघातः कार्यः ॥ तदेवाधिकरणं वार्त्तिककारमतेनारचयति ॥

पेषणं नूतनमथ प्राक्तनत्वाक्रमान्तरात् ।
नूतनं प्राक्तनं धर्ममात्रबाधस्य लाघवात् ॥ ४३ ॥

महापितृयज्ञे एवं श्रूयते पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थमिति मृतवत्सा धेनुरभिवान्या इत्युच्यते प्रक्षिप्य मथिताः सक्तवो मन्थास्तत्र यत् पेषणं तन्न प्राक्तनम् कुतः क्रमव्यत्यासात् प्रकृतौ हि प्रथमतः पेषणं पश्चात् पुरोडाशश्रपणम् अत्र तु प्रथमतः श्रपणेन धानाः सम्पाद्य पश्चात् सक्तुभावाय पेषणं तस्मान्नूतनमिति प्राप्ते ब्रूमः चोदकप्राप्तप्राक्तनपेषणगतं क्रमयोरुभयोर्बाधे गौरवात् क्रममात्रं बाध्यं पेषणपदार्थस्तु सत्त्वेवेति तद्धर्मोदपादिवन्मन्थ इत्यादयोऽत्र कर्तव्याः ॥ इति माधवीये जैमिनीयन्यायमालाविस्तरे दशमाध्यायस्य द्वितीयः पादः समाप्तः ॥

---

तृतीयपादे प्रथमाधिकरणमारचयति ॥

प्रयाजैकादशत्वादिविशेषविधिभिर्युते ।
पश्वादौ सामिधेन्यादिविध्यन्तो नास्तु नास्त्यसौ ॥ १ ॥
विशिष्टाङ्गविधौ नासौ चोदकस्याप्रवृत्तितः ।
लाघवाद्गुणमात्रस्य विधेः सोऽस्त्यतिदेशतः ॥ २ ॥

अग्नीषोमीयपशावेकादशप्रयाजाः श्रुताः । चातुर्मास्येषु नव प्रयाजाः । वायव्यपशौ हिरण्यगर्भ इत्याघारमन्त्र इत्यादिभिर्गु

तेषु पश्वादिषु प्राकृतेति कर्तव्यता सामिधेन्यादिर्नास्ति कुतः संख्यामन्त्रादिगुणविशिष्टस्य प्रयाजाघाराद्यङ्गस्य प्रत्यक्षविधौ सत्युपदिष्टेनैवाङ्गेन निराकाङ्क्षे पश्वादौ चोदकस्याप्रवृत्तेरिति पूर्वः पक्षः। पश्वादिविधिस्तावदिति कर्तव्यतामाकाङ्क्षति। तत्र प्राकृताङ्गान्यतिदिश्य वा तदाकाङ्क्षा पूर्यतां विधास्यमानान्यङ्गान्तराणि उपदिश्य वेति वीक्षायां क्लृप्तोपकारतया प्राकृताङ्गातिदेश एव न्याय्यः। ततश्चातिदेशतः प्राप्तप्रयाजाद्यङ्गमनूद्य गुणमात्रविधौ लाघवं भवति गुणविशिष्टाङ्गविधौ तु गौरवं स्यात् तस्मात् तत् संख्यान्तरमन्त्रान्तराभ्यां पूर्वयोः संख्यामन्त्रयोर्बाधेऽपि प्रयाजाघारसामिधेन्यादीति कर्तव्यता प्राप्नोत्यतिदेशादिति राद्धान्तः॥

द्वितीयाधिकरणमारचयति॥

हिरण्यगर्भ आघारे पूर्वस्मिन्नुत्तरेऽथवा।
लिङ्गादाद्ये समं लिङ्गं क्लृप्तकार्यत्वतोऽन्तिमे॥३॥

वायव्यपशौ हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयतीति श्रुतो मन्त्रः पूर्वस्मिन्नाघारे स्यात् कुतः मन्त्रलिङ्गात् प्रकृतौ प्राजापत्यः पूर्व आघारः अस्मिन्नपि मन्त्रे हिरण्यगर्भशब्देन प्रजापतिरभिधीयते प्रजापतिर्वै हिरण्यगर्भ इति वाक्यशेषादिति प्राप्ते ब्रूमः अन्तिम आघारे मन्त्रः कुतः क्लृप्तकार्यत्वात् प्रकृतावमन्त्रकः प्रथमाघारः प्रजापतिं मनसा ध्यायन्नाघारयति इति ध्यानमात्रस्याभिधानात्तूष्णीमाघारमाघारयतीत्यमन्त्रकत्वं साक्षादेवश्रुतं द्वितीये आघारे ऊर्ध्वोऽध्वर इत्यादिको मन्त्रो विहितः अतो मन्त्रकार्यं तत्र क्लृप्त तस्माद् द्वितीये आघारे हिरण्यगर्भमन्त्रविधिः यत्तु प्रजापति देवता मन्त्रलिङ्गं तदिन्द्रेऽपि समानम्। इन्द्रोऽपि हि प्रजानां पतिः तस्मादूर्ध्वोऽध्वर इति मन्त्रं बाधित्वा हिरण्यादिमन्त्रस्तत्र विधीयते॥ तृतीयाधिकरणमारचयति॥

किमुत्तरासादनस्त्वपरिधौ च नियोजनम्।

कर्मान्तरम्प्राकृतयोर्गुणो वाद्योऽन्त्यसम्भवात्॥४॥
पृथुतासूक्ष्मताग्रस्य परिधेश्चस्य विष्टताम्।
आश्रित्य सम्भवात्कर्त्तुं गुणौ तौ लाघवान्मतौ॥५॥

सपशुकेषु चातुर्मास्येषु श्रूयते। उत्करे वाजिनमासादयति परिधौ पशुं नियुञ्जीतेति एते आसादननियोजने प्राकृताभ्यामन्ये कर्मणी विधीयेते इत्याद्यः पक्षो युक्तः। कुतः प्राकृतयोरत्यन्तमसम्भवात्। वेदे कृष्णानां पांसूनां स्तूपो राशिरुत्करः न हि तत्र वाजिनाख्यानीरस्यासादनं सम्भवति। नाप्यङ्गुलीवर्तनीयस्य परिधौ पशुर्नियोक्तुं शक्यते ततः प्राकृतस्य दृष्टप्रयोजनस्यासम्भवाददृष्टार्थत्वं तदेतत्सदृशे आसादननियोजने कर्मान्तरे विधीयेते इति प्राप्ते ब्रूमः। प्रयाजे कारशानादिवल्लाघवात् प्राकृतयोरेव वाजिनासादनपशुनियोजनयोरुत्करपरिधि गुणौ विधीयेते। न च तीक्ष्णत्वेऽपि सूच्यग्रवदयोग्यत्वं मृद्राश्यग्रस्य पृथुत्वेन स्वल्पपात्रासाधनयोग्यत्वात् परिधिश्चैष्टिकवेद्यामिव नाणीयान् किन्तूत्तरवेद्यां स्थविष्ठस्तस्माद्गुणविधिः॥

चतुर्थाधिकरणमारचयति॥

षड्भिर्दीक्षयतीत्यग्निगतं प्राकृतबाधकम्।
समुच्चितं वा बाधः स्यात्कार्यैक्यात्तत्त्ववाक्यतः॥६॥
अग्नौ होमाङ्गताक्लृप्तेरतिदिष्टेन तुल्यता।
विनावृत्तिं द्वादशत्वसिद्ध्यै स्यात्समुच्चयः॥७॥

अग्निचयने दीक्षाहुतयः श्रूयन्ते षड्भिर्दीक्षयतीति प्रकृतावपि स्रुवेण चतस्रो जुहोति दीक्षितत्वायेत्यादि दीक्षाहुतयः षड्विहिताः। तत्र मन्त्रभिन्नाः आकूत्यै प्रयुजेऽग्नये स्वाहेत्यादयः प्राकृता मन्त्राः आकूतिमग्निं प्रयुजं स्वाहा इत्यादयो वैकृताः तत्र वैकृतमाहुतिमन्त्रषट्कं किं प्राकृतस्य बाधकं किं वा प्राकृतेन समुच्चितमिति संशये बाधकमिति तावत्प्राप्तं कुतः कार्यैक्यात् दीक्षणीयेष्ट्यङ्गभूताहुत्युपका

तल्लक्षणं मन्त्रार्थे प्राकृतानां मन्त्राणां यदेव वैकृतानामपि नच विकृतौ तन्न प्रतीयते इति शङ्क्य स्वाहान्ततारूपेण लि-ङ्गेन मन्त्राणामाहुत्युपकारकत्वप्रतीतेः आहुतीनाञ्च षड्भि र्होमसंयतीतिवाक्येन सीक्षणीयाङ्गत्वप्रतीतेः। तस्मात्तत्रश्रूय-माणैर्मन्त्रैरतिदिष्टानां बाध इति पूर्वपक्षः अग्नौ मन्त्राणां स्व रूपं यद्यपि प्रत्यक्षश्रुतिसिद्धं तथापि होमाङ्गत्वे लिङ्गेन क ल्प्यं तथा चातिदेशकल्प्ययो स्तुल्यबलत्वान्न बाध्यबाध-कता एवमपि न समुच्चये प्रमाणमस्तीति चेत्। अस्त्येव द्वादश जुहोतीति संख्याविधानेन तत्सिद्धेः नच वैकृतानामेव षण्णा मावृत्त्या संख्यासिध्यतीति वाच्यम्। आवृत्तेरश्रुतत्वात् नच-साकल्पयितुं शक्यते। अन्यथापि संख्योपपत्तेः तस्मात् समुच्च य इति राद्धान्तः। पञ्चमाधिकरणमारचयति॥

एकादिना समुच्चेयं पुनर्निष्कृत इत्यदः।
बाधकं वा समुच्चेयमुभयोरित्युदीरणात्॥८॥
आधानदक्षिणोपेतमुभयोरित्यनूद्यते॥
ददातीत्यविधायित्वान्नकार्यैक्याद्बाधकं भवेत्॥९॥

आधाने विकल्पिता गोद्वयदक्षिणाद्याधानदक्षिणाश्च ब ह्व्यः श्रूयन्ते एका देया षड्देया द्वादश देया इत्यादिना पुनरा धाने तु पुनर्निष्कृतो रथो दक्षिणेत्यादि श्रुतं भग्नः सन्पुनः समाहितः पुनर्निष्कृतः सेयं पुनर्निष्कृतादिदक्षिणा किमिति दिष्टयैकादिसंख्यया दक्षिणया समुच्चीयते उत तां बाधत इ-ति संशयः। उभयोर्दद्यादाधेयिकीः पौनराधेयिकीश्चेत्युक्त त्वात् समुच्चय इति पूर्वः पक्षः। ददातीति वर्तमाननिर्देशस्य-विधित्वाभावादाधानकाले पूर्वं दत्तं पुनराधानकाले दीयमा नञ्च मिलित्वोभयोरित्यनूद्यते। दक्षिणास्वरूपस्य तत्कार्य स्यैकत्वादुपदिष्टमतिदिष्टस्य बाधकम्॥

षष्ठाधिकरणमारचयति॥

वासो वत्सं समुच्चेयमन्वाहार्येण वा न वा।

अविरोधात्समुच्चेयं न कार्यैक्याद्विरोधतः॥ १०॥
आग्नयणे श्रूयते वासो दक्षिणा वत्सः प्रथमजो दक्षिणेति तदे
तत् प्राकृतेऽन्वाहार्येण सह विरोधाभावात् समुच्चयत इति म
तः पूर्वपक्षः। एककार्यत्वे विरोधित्वान्न समुच्चयः किन्तु बा
ध इति राद्धान्तः॥ सप्तमाधिकरणमारचयति॥
अन्वाहार्यस्य धर्मोऽत्र न कार्यः क्रियतेऽथवा।
नतद्धर्मत्वतोमैवं साधनत्वप्रयुक्तितः॥ ११ ॥
सन्त्यन्वाहार्यधर्माः तत्कल्पसूत्रकार उपजहार दक्षिण
सद्म उपहर्तव्याइति संप्रेष्यति। ये ब्राह्मणा ऋत्विजस्तान्यज
मान आह दक्षिणत एतेति तेभ्योऽन्वाहार्यं ददाति। ब्राह्मणा
अयं व ओदन इति प्रीता गृहीता उत्तरतः परीतेति संप्रेष्यती
ति सोऽयं धर्मो वासोवत्सेन कार्यः। तस्यान्वाहार्यनिमित्तत्वात्
मैवम्। अन्वाहार्यस्य दक्षिणारूपेणाऽऽनतिसाधनत्वप्रयुक्ता
स्ते धर्माः क्रियन्ते तत्साधनत्वं वासोवत्सेऽपि समानं तस्माद
त्रापि सन्त्येते धर्माः॥ अष्टमाधिकरणमारचयति॥
पाकोऽस्तिनोवावत्सेस्यादन्वाहार्यस्य दर्शनात्।
नवत्सनाशाच्छ्रौती दक्षिणामांसदानतः॥ १२॥
अन्वाहार्ये पाकोऽस्ति पूर्वन्यायेन तद्धर्मातिदेशाद् वत्सेऽपि
पाकः स्यादिति चेन्न वत्सनाशप्रसङ्गात् अस्त्विति चेन्न तथा
सति मांसदानेन श्रुतहानाश्रुतकल्पने प्रसज्येयातां तस्मा
न्नास्ति वत्से पाकः॥ नवमाधिकरणमारचयति॥
वासस्यस्तिनवापाकोविनाशाभावतोऽस्त्यसौ॥
वैयर्थ्यादप्यशक्यत्वात्पाकोवाससि नोचितः॥१३॥
वाससउष्णोदकभाण्डप्रक्षेपेण वत्सस्येव विनाशो नास्ति
तस्मादन्वाहार्यवत् पाकोऽस्तीति चेन्न ओदनत्वार्थो हि पा
कः नहि वाससः सहस्रधा पच्यमानस्याप्योदनता सम्भव
ति नच पाकः कर्तुं शक्यतेन ह्युष्णोदकसंयोगः पाकशब्द
स्यार्थः किंतर्हि तण्डुलानां विक्लित्तिं जनयितुं कृतः पुरुषप्र

यत्नः नत्ववासस्यत्तिविक्लित्तिःतस्मादतिदिष्टःपाकोबाध्य
ते॥ इयमधिकरणमारचयति॥

आघारोऽस्तिनोवात्रशक्यत्वाद्धृतसवासयोः।
अत्यन्ताहार्य्यवत्त्वेवं स्वाङ्गतायाअसम्भवात्॥२४॥
स्पष्टोऽर्थः॥

एकादशाधिकरणमारचयति॥

दक्षिणाद्वादशशतंतस्येत्येतद्गवादिषु।
सर्वेषुकेचिदिच्छाद्येप्रत्येकंमिलितेषुवा॥२५॥
संख्यागुणत्वप्रत्येकंगवाद्यन्वयतोऽग्रिमः।
वाक्यभेदान्नतत्किन्तुमिलितेषुसमुच्चयात्॥२६॥
संख्यानोचित्यतोधान्येसर्वेषांनसमुच्चयः।
असर्वेष्वितिपक्षेऽपिप्रसावोवैकमेववा॥ २७॥
संख्यौचित्येनपशवोनैतत्तस्येत्यनन्वयात्।
सकृत्वेऽप्यत्रयत्किञ्चिन्माषावागावएववा॥२८॥
यत्किञ्चिन्नियमाभावान्माषाःसन्निहितत्वतः।
माषानिराकृतागावःप्राथम्याच्चोपकारतः॥ २९॥
तस्येतिवाक्याद्गोद्रव्यनयुक्तेःप्रकृतःक्रतुः।
संख्यान्तरेचेद्विकृतौस्याद्गवांबाध्यतामियम्।२०॥

ज्योतिष्टोमेद्रव्याण्यनुक्रम्यसंख्याविशिष्टादक्षिणावि
धीयते।गौश्चाश्वश्चाश्वतरश्चगर्दभश्चाजाश्चावयश्चव्रीहय
श्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशत दक्षिणेति द्वाद
शाधिकं शतं तत्र संशयः सेयं संख्या किं गवादिसर्वद्रव्य-
विषया किंवा कतिपयविषया सर्वत्वपक्षेऽपि प्रतिद्रव्यमेयं
संख्याऽत मिलितानां तत्र गवादिद्रव्याणि प्रधानानि संख्यातद्ग
तो गुणः प्रतिप्रधानञ्च गुणावृत्तिर्न्याय्या तस्माद्गवादिद्र
व्येषु प्रत्येकमियं संख्येति प्रथमपक्षगते प्रथमे संख्यावि
कल्पे प्राप्ते ब्रूमः। नैतद्युक्तं वाक्यभेदप्रसङ्गात्। अतो मिलि
तानां इयं संख्येति द्वितीयसंख्याविकल्पोऽभ्युपेयः। तथाच

क्षिणः समूहस्यैवातिदेश इति सिद्धान्ते॥
पञ्चविंशाधिकरणमारचयति।
दण्डाकलितवत्सत्रे त्र्यनीकावृत्तिरिष्यते॥
सस्थानवृद्धिरथवा सारम्भो हविवक्षया॥ २९॥
न विवक्षा वाक्यभेदान्नवानीके तु पूरणम्।
एकैकवृद्ध्यानविना तेनैकैकं विवर्धते॥ ३०॥

अस्ति समूढस्य द्वादशाहस्य विकृतिर्गवामयनं संवत्सरसत्रं तत्र त्र्यनीका चोदकेन प्राप्ता त्रीण्यनीकानि अग्राण्यैन्द्रवायवशुक्राग्रयणरूपाणि यस्यां क्रियायां सा त्र्यनीका। तयाच त्रिःपरिवृत्तया द्वादशाहस्य तयोः प्रायणीयोदयनीययोरह्नोर्मध्ये वर्तमानेषु दशस्वहःसु दशमव्यतिरिक्तानि नवसंख्याकान्यहानि पूरितानि। अतः संवत्सरसत्रेऽपि प्रायणीयोदयनीयमध्यवर्तीनि पूरयितव्यानि। तत्पूरणञ्च यथोक्तायास्त्रिःपरिवृत्तायाः नवदिवसयुक्तायाः त्र्यनीकायाः समूहावृत्तिमन्तरेण न सिध्यतीत्यावृत्तिः प्राप्ता तस्याञ्च द्वैविध्यं विद्यते यथा दण्डस्यावृत्त्या भूमाववकलितव्यायामादिमध्यावसानभागैः सहितं कृत्स्नं दण्डं पुनः पुनरावर्त्तयति न त्वेकैकं भागम्। तथा नवदिवसानामावृत्तिरित्येकः प्रकारः यथाध्येतारः प्रपाठकमावर्त्तयितुकामा एकैकं भागमसकृत् पठन्ति। तथा नवदिवससमूहवर्त्यैककस्याह्नोऽसकृदनुष्ठानमित्यपरः। तत्राद्यस्तावत् प्राप्नोति। कुतः अहःशब्दस्य विवक्षितत्वात् ऐन्द्रवायवाग्रप्रथममहर्भवतीत्युक्तोऽहःशब्दो यच्छुक्राग्रमथाग्रयणाग्रमित्यादिषु वाक्येषु अनुषज्यते यथोक्ताग्रत्वविशिष्टानामह्नां क्रमविशेषश्चाप्यशब्दैर्नियम्यते। तथा सति यद्यैन्द्रवायवाग्रमेवाहर्नैरन्तर्येणासकृदावर्त्यते तदानीमथ शुक्राग्रमहरित्यादिकं वाध्येत। तस्मात् क्रमयुक्तानामग्रत्वविशेषोपेतानामह्नां नवानां चोदकप्राप्तानां तथैवानुष्ठाने सति पुनः पुन

श्चोदकेन तथैव प्राप्ते ऽदण्डाकलितवदावृत्तिरिति पूर्वः प
क्षः। अहःशब्दो न विवक्षितः वाक्यभेदप्रसङ्गात्। ऐन्द्रवा
यवाग्रं प्रथमं भवति तच्चाहरिति। अहः सङ्ग्रामनिष्कृत्ये-
वाक्यं भेतव्यं प्रसज्येत। अहःशब्देन विवक्षितस्तत्पृष्ठभिर
ग्रशब्दैर्यथोक्ताग्रत्वानामेवानन्तर्यं नियम्यते। तथा सति
द्वितीयपर्याये विहितस्याग्रयणाग्रत्वस्योपरि ऐन्द्रवाय-
वाग्रत्वं नानुष्ठातुं शक्यम्। तदनुष्ठानाभावे च स्वस्थानवि
वृद्ध्यैव प्रायणीयोदयनीयान्तरालपूर्तिर्भवति पूरयितव्य
मन्तरालं नवधा विभज्य प्रथमभागगतेष्वहःसु ऐन्द्रवायव
ग्रत्वं द्वितीयभागेषु शुक्राग्रत्वमित्यनेन क्रमेणानुष्ठानव्यम्।
मेवं स्वस्थानविवृद्धिः स्वऐन्द्रवायवाग्रत्वस्य स्थाने शुक्रा-
ग्रानुवृत्तेर्भावित्वं नन् प्रकृतावेकस्मिन्नु द्विभवति। इहतु बहुषु
अहःसु इति तत्र वृद्धिः न त्वनीका चोदकप्राप्ता प्रत्यक्ष वि
हितानुष्ठानस्योक्तो विचारः स्यादिति वार्तिके दूषितम्॥

षड्विंशाधिकरणमारचयति

व्यूढेभस्तादिमन्त्राणामर्थानाच्च व्यतिक्रमः।
मन्त्राणामेव वा द्युः स्यादविशेषेण कीर्तनात्॥ ३९॥
छन्दसां व्यत्ययः प्रोक्तो नार्थानां तेन मन्त्रगः
गायत्र्यादि विपर्यासात् अर्थे वृत्तिः प्रशस्यते॥ ४०॥

व्यूढे द्वादशाहे भस्पपवमानतदुभयमन्त्रपरिधिकपाला
नि चोदकप्राप्तानि तत्र भस्समन्त्रेषु सवनत्रयगतेषु गायत्री
छन्दसस्त्रिष्टुप् छन्दसो जगती छन्दस इति श्रुत तथा पवमा
नत्रयविषयेष्वन्वारोहमन्त्रेषु गायत्री छन्दास्त्रिष्टुप्छन्दा
जगती छन्दा इति श्रुत तथा परिधिस्तावके ऽर्थवादे पठ्यते
गायत्रो मध्यमः परिधिस्त्रैष्टुभो दक्षिणो जागत उत्तर इति त
था कपालविषयं वाक्यं पठ्यते अष्टाकपालः प्रातःसवनी
य एकादशकपालो माध्यन्दिनीयो द्वादशकपालस्तृतीय
सवनीय इति अत्राष्टत्वादिभिस्तिसृभिः सङ्ख्याभिर्गायत्र्यादि

छन्दांसि तत्तदक्षरसमूहिद्वारेणोपस्थाप्यन्ते। एवं स्थिते-सति व्यूढप्रकरणे छन्दोव्यतिक्रमः पठ्यते। छन्दांसि वाअन्योऽन्यस्य लोकमभिध्यायन् गायत्री त्रिष्टुभस्त्रिष्टुप्जगत्या जगती गायत्र्या इति तत्र संशयः। सोऽयं छन्दोव्यतिक्रमो भक्षपवमानपरिधिकपालरूपिणामर्थानामुभयविधमन्त्रगतछन्दोवाचिशब्दानाञ्च कार्य्यः किंवा तेषां शब्दानामेवेति मन्त्रगतानामेवेति विशेषाश्रवणात् सर्वत्र व्यतिक्रम इत्याद्यः पक्षः। तेन गायत्रशब्दनिर्दिष्टः प्रातः सवनीयो भक्षस्त्रैष्टुभशब्दितस्य माध्यन्दिनीयभक्षस्य स्थाने माध्यन्दिनीयो जागतस्य स्थाने जागतो गायत्रस्य प्रातःसवनिकस्य स्थाने तथा वहिष्पवमानो माध्यन्दिनसवने माध्यन्दिनपवमानस्तृतीयसवने आर्भवपवमानः प्रातःसवने तथा मध्यमः स्थविष्ठः परिधिर्दक्षिणतोऽणीयान्द्राघीयानुत्तरः अणिष्ठो ह्रसिष्ठो मध्यमः तथाष्टाकपालो माध्यन्दिने सवने एकादशकपालस्तृतीयसवने द्वादशकपालः प्रातःसवने सोऽयमर्थव्यतिक्रमः मन्त्रद्वयशब्देषु अप्येवं योज्य इति प्राप्ते ब्रूमः। छन्दांसि वा इति वाक्येऽर्थानां व्यतिक्रमो नोक्तः अतो मन्त्रगतानां गायत्र्यादिशब्दानामेव व्यतिक्रमः यस्त्वर्थेषु गायत्र्यादिशब्दप्रयोगः स प्रशंसार्थः लक्षणार्थानां मुख्यछन्दस्त्वाभावादिति राद्धान्तः॥

इति माधवीये जैमिनीयन्यायमालाविस्तरे
दशमाध्यायस्य पञ्चमः पादः समाप्तः॥

---

दशमाध्यायस्य षष्ठपादे प्रथमाधिकरणमारचयति।

सामैकस्यां ऋचि वा स्यादाद्यः स्वाध्यायवद्भवेत्।
वचनात्त्रिषु संयुक्तात्तत्तो न सामऋचि भवेत्॥ १॥

पवमानाज्यपृष्ठादिस्तोत्रेषु यद्दिदिते रथन्तरबृहद्रूपादिसामाध्येतारएकस्यामृच्यधीयते तत् किं स्तोत्रप्रयोग-

कालेऽध्येकस्यामृचि गेयं किं वाऽऽदृचे गेयमिति संशयः।अध्ययनमेकस्यानुष्ठानार्थेनाध्ययनमेकस्यामृचि सामनः कृतं नयैकस्यामेव सामगेयमिति पूर्वः पक्षः। अक्षरेण प्रथमाया ऋचः प्रस्तोति अक्षरेणोत्तरयोरिति द्विसृत्रः प्रस्तोत्रा गातव्यो भागो निरूप्यते तदिदं ऋचस्य लिङ्गं ऋक् सा मे चावमिथुनौ सम्भवा वेमासदृग्देवता सामदेवतयोः संवादरूपेऽर्थवादे सामदेवतैकामृचं द्वे ऋचौ च प्रत्याख्यायति स ऋचो ऽङ्गीचकार तदिदमपरं लिङ्गं ताभ्यां लिङ्गाभ्यामुपबृंहितादेकं साममृचे क्रियत स्तोत्रीयमिति वचनात् ऋचे गातव्यम्॥

द्वितीयाधिकरणमारचयति॥

स्वर्दृक् शब्दे वीक्षणे च किं स्यादङ्गाङ्गिता यवा।
मीलनावधिना ग्राह्येऽस्तु भिन्नवाक्येन तद्विधेः॥ २॥
प्रतिशब्देनावधिर्हि द्वयोर्मौवाक्यानभिद्यते।
सत्येवं मीलनस्यापि विधिर्नोत्तरयार्भवेत्॥ ३॥

अस्ति रथन्तरसाम्नो योनावभित्वा शूरेत्येतस्यामृचि स्वर्दृक् शब्दः ईशानमस्य जगतः स्वर्दृशमित्यास्नाता अस्ति चोद्गातुः कर्तृतानृचे रथन्तरे प्रस्तूयमाने संमीलयेत् स्वर्दृशं प्रतिवीक्षेतेति श्रुतेः। तत्र संशयः किं स्वर्दृक शब्दोच्चारण वीक्षणयोरङ्गाङ्गिभावोऽत्र विधीयते किं वा विधीयमान संमीलनविधिनैव स्वर्दृक् शब्दोच्चारणं निर्दिश्यत इति। तत्र संमीलवाक्याद्वीक्षणवाक्यं भिन्नं ततो मीलनावधित्वेनान्वयः सम्भवतीति। किञ्च वीक्षेतेति लिङ्प्रत्ययोऽत्र विधायकः श्रूयते। ततः स्वर्दृक् शब्दोच्चारणं वीक्षणाङ्गं वीक्षणं वा तदङ्गमित्यङ्गाङ्गिभावोऽभ्युपेयस्तथा सति स्वर्दृक शब्दरहितयोर्ऋचोरुत्तरयोर्गीयमाने रथन्तरेऽपि विहित संमीलनानुवृत्तिः फलिष्यतीति पूर्वः पक्षः। स्वर्दृशं प्रतीत्यनेन कर्मप्रवचनीयेन प्रतिशब्देन स्वर्दृक् शब्दोच्चारण

सम्मीलनकालावधित्वं योत्यते नचात्र भिन्नवाक्यत्वमुप सक्वाक्यत्वसम्भवात्। तथाहि विरोधपरिहाराय सत्यपि वचनान्तराणि सोमपानकालमारभ्य नेत्रसम्मीलनमारभ्य दक्षिणामर्थत्वेनाष्टक्लृप्तिपरिहारीत्येकवाक्यं सम्पद्यते एवमस्मत्तरयोश्चैव। सम्मीलनविध्यभावः फलिष्यतीति राद्धान्तः॥

तृतीयाधिकरणमारचयति॥

गवामयनिके पृष्ठ्यः षडहे मध्यमेऽद्वये।
बृहद्रथन्तरत्वात भवेन्नु किञ्चित्क्वचिद्विते॥४॥
द्वन्द्वगर्भबहुव्रीहेराद्योऽन्त्येऽपि समासो।
अन्योऽन्यनिरपेक्षस्य चोदकाद्न्तिमो भवेत्॥५॥

द्वादशाहे पृष्ठ्यःषडहे उपमन्यस्तत्र षष्ठामप्यह्नां क्रमेणरथन्तरबृहद्वैरूपवैराजशाक्वररैवतानि सामानि विहितानि। गवामयनेतु विकृतिरूपोयः पृष्ठ्यःषडहः तत्र श्रूयते। पृष्ठ्यःषडहो बृहद्रथन्तरसामेति चोदकप्राप्तयोर्बृहद्रथन्तरयोः पुनर्विधानाद्वैरूपादिनिवृत्तिः। ततः शिष्यमाणं बृहद्रथन्तरं नामद्वयं किंप्रत्यहं कर्तव्यं किंवा केषुचिदहःसुपृष्ठ्यत्। केषुचिद्रथन्तरमिति संशयः। बृहद्रथन्तरञ्च बृहद्रथन्तरे तेच सामनीयस्येति द्वन्द्वगर्भेतं बहुव्रीहाविततरेतरयोगद्वन्द्वेन साम्नोः साहित्यं प्रतीयते। ततः प्रत्यहं सामद्वयमिति पूर्वःपक्षः। तेसामनीयस्याह्न इत्यह्नो यद्यन्यपदार्थत्वं तदाभवदेकमेव स्यादिहतु षडहोऽन्यपदार्थस्तथासति षडहे द्वयोः साम्नोः साहित्यं सिद्धान्तेऽपि समानं प्रकृतौ साम्नोरन्योऽन्यनिरपेक्षत्वादिहापि निरपेक्षत्वमेव सामचोदकेनाति दिश्यते। तस्मात् केषुचिदहःसुकिञ्चित्साममेति राद्धान्तः॥ चतुर्थाधिकरणमारचयति॥

सुरैकादशिनात् किंमायणीपोद्यनीययोः।
प्रत्येकमखिलाः किंवाविभज्याःसुत्ययोरपि॥६॥
उद्देश्ययोःप्रधानत्वात्प्रत्येकंपशवोऽखिलाः।

नोद्देश्यौ शतवद्भागः शिष्टस्त्वासन्नितोऽन्तिमे ॥७॥

द्वादशाहे श्रूयते। एकादशिनान् प्रायणीयोदयनीययोर् निरान्त्रयोरालभेरन्निति तत्रैते पशव एकादशापि प्रायणीयेऽहनि कर्त्तव्यास्तथोदयनीयेऽपि सर्वे कर्त्तव्याः कुतः प्रायणीयोदयनीययोरुद्देश्यत्वेन प्राधान्यात् प्रतिप्रधानं चावृत्तेर्युक्तत्वादिति पूर्वः पक्षः। वचनान्तरेण विहितानामेकादशानां प्रकरणेन द्वादशाहाङ्गत्वे सिद्धे देशाकाङ्क्षायां तान् पशूनुद्दिश्य प्रायणीयोदयनीयौ देशत्वेन विधीयेते। ततः कुत उद्देश्यत्वं कुतस्तरां प्राधान्यं कुतस्तमां पश्वावृत्तिः एवं सति यथा शतं देवदत्तयज्ञदत्ताभ्यां विधीयतामित्यत्र देवदत्ते पञ्चाशत् विधीयते यज्ञदत्ते पञ्चाशदिति विभागस्तथा प्रायणीये पञ्च पशव उदयनीये पञ्चेति विभागो युक्तः यस्त्ववशिष्ट एकः पशुरन्तिमः स प्रत्यासन्नत्वादन्तिमेऽहन्युदवसानीये कर्त्तव्यः ॥

पञ्चमाधिकरणमारचयति ॥

किं सर्वपृष्ठे सर्वाणि पृष्ठदेशे यथोक्तयः।
पृष्ठशब्दात् पृष्ठदेशो वचनात्तु व्यवस्थितिः ॥८॥

इदमाम्नायते। विश्वजित् सर्वपृष्ठ इति षडहे षट्स्वहःसु क्रमेण रथन्तरं बृहद्वैरूपमित्यादिभिः षड्भिः सामभिः पृष्ठस्तोत्रं निष्पादितं तानि सर्वाणि पृष्ठसामानि यस्मिन् विश्वजिति सोऽयं सर्वपृष्ठः तत्र माध्यन्दिनपवमानमैत्रावरुणसाम्नोरन्तरालरूपे पृष्ठस्तोत्रदेशे किं सर्वाणि पृष्ठसामानि कार्य्याणि किं वा यथावचनं देशव्यवस्थेति संशयः पृष्ठकार्य्यगमकेन पृष्ठशब्देन पृष्ठदेशप्राप्ते वचनेन देशविशेषो व्यवस्थाप्यते वचनञ्चैवमाम्नायते पवमाने रथन्तरं करोत्याभवे बृहन्मध्य इतराणि वैरूपं होतुः पृष्ठं वैराजं ब्रह्मसाम शाक्करं मैत्रावरुणस्य रैवतमच्छावाकस्येति वचनं हि न्यायाद्बलीयः तस्माद्देशविशेषो व्यवस्थितिः ॥

षष्ठाधिकरणमारचयति॥

कार्त्स्न्याद्वैरूपवैराजे उक्थ्यषोडशिनोः क्रतौ।
पृष्ठे स्यातां क्रतुसंयोगाद्राद्योरन्यः पृष्ठलिङ्गतः॥ १९॥

इदमाम्नायते उक्थ्यो वैरूपसामैकविंशः षोडशी वैराजसामेति। तत्र क्रत्नौ उक्थ्ये वैरूपं सामक्रत्नौ षोडशिनि वैराजं वैरूपं साम यस्मिन्नुक्थ्ये क्रतौ वैराजं साम यस्मिन् षोडशिनि क्रताविन्येवं क्रतुसम्बन्धप्रतीतेः। मैवं प्रकृतौ रथन्तरसाम बृहत्सामेत्येवं विधेयस्य निर्देशस्य पृष्ठस्तोत्रविषयत्वदर्शनादत्रापि तन्निर्देशेन पृष्ठलिङ्गेन पृष्ठकार्ये वैरूप्यं वैराजत्वं भवितुमर्हति क्रतुसम्बन्धस्तयोः पृष्ठद्वारेणोपपद्यते॥ सप्तमाधिकरणमारचयति॥

त्रिवृदग्निष्टुदित्येतत् सर्वत्र स्तोम एव वा
आद्यस्त्रैगुण्यवाचित्वादन्यः स्तोमे स्यरूढितः॥ २०॥

एवं श्रूयते। त्रिवृदग्निष्टुदग्निष्टोम इति किं त्रिवृत्त्वमग्निष्टुति क्रतौ सर्वेषु साधनेषु सम्बध्यते किंवा स्तोममात्रसम्बन्धितत् त्रिवृद्रज्जुरित्यादौ त्रिवृच्छब्दस्य त्रैगुण्यवाचित्वदर्शनादत्रापि क्रतुसाधनेषु यासंख्या श्रूयते सा सर्वत्र त्रिवृत्त्वेन विक्रियत इति प्राप्ते ब्रूमः। यद्यपि त्रिवृच्छब्दोऽवयवप्रसिद्ध्या लोके त्रैगुण्यं ब्रूते तथापि वेदे रूढ्या स्तोमवाचि त्रिवृद्बहिष्पवमान इत्युक्त्वा स्तोत्रीयाणां नवानामृचामनुक्रमेण स्तोमविषयमेव त्रिवृत्त्वम्॥

अष्टमाधिकरणमारचयति॥

संसवे रौहयोरेकं पृष्ठं यद्वा समुच्चितम्।
एकं प्रकृतिवद्विश्वजिद्वदन्यत्र चेतरत्॥ २१॥
वचनाद्विश्वजित्यत्र साम्नोर्द्वं स्तोत्रयोर्द्वयोः।
नेहास्ति ततः पृष्ठमेव सा हि तस्मात्पुनर्विधेः॥ २२॥

इदमाम्नायते। संसवे उभे कुर्यादभिजिता वैकाहउभे बृहद्रथन्तरे कुर्यादिति किमत्र बृहद्रथन्तरयोरेकं पृष्ठ-

स्तुताविति तदन्यस्तुतौ स्यात् । किं वा समुच्चितमुभयं पृष्ठस्तु
ताविति संशयः प्रकृतौ द्वयोर्विकल्पितत्वादेकस्मिन्प्रयो
ग एकस्य पृष्ठत्वादन्यत्रापि तथानुयुक्तम्। तथा सत्यवशि
ष्टं साम सर्वे पृष्ठं विश्वजित् न्यायेन स्तोत्रान्तरे प्रयोक्तव्यमि
ति पूर्वः पक्षः तादृग् वचनाभावेनात्र विश्वजिद्वैषम्यात्प्र
कृतिवद्विकल्पे सति पुनर्विधानवैयर्थ्यात् समुच्चय इति
राद्धान्तः॥ नवमाधिकरणमारचयति॥

त्रयस्त्रिंशारम्भणे किं तदन्ते मधुभोजनम्।
षडहान्ते यथा वा स्यात् सान्निध्यात् वाक्यतोऽन्तिमः १३

पृष्ठ्यः षडहो द्विविधः त्रयस्त्रिंशान्तः त्रयस्त्रिंशादिश्चेति।
द्वादशाहे त्रिवृत् पञ्चदश सप्तदश एकविंश त्रिणव त्रय-
स्त्रिंश इत्येतैः स्तोमैर्युक्तान्यहानि षड् विहितानि। सोऽयं त्र
यस्त्रिंशान्तः। क्वचिद्विकृतौ व्यत्यासेन त्रयस्त्रिंशादित्रिवृद
न्तः पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणस्त्रिवृदन्तमः कार्य इति
तत्र मधुभोजनं चोदकप्राप्तं तच्च प्रकृतौ विहितं त्रयस्त्रिंशे
ऽहन्यनुष्ठिते ऽनन्तरं कृतमित्यत्रापि सान्निध्यात् त्रयस्त्रिं
शान्ते कर्तव्यमिति प्राप्ते ब्रूमः। संस्थिते पृष्ठ्ये षडहे मधुयाश
येद् घृतं वेति वाक्येन प्रकृतौ षडहप्रयोगसमाप्ते मधुभोजनं
विहितं त्रयस्त्रिंशसन्निधिस्तु नान्तरीयकः। अतोऽत्रापि ष
डहावसाने कर्तव्यत्वात् त्रिवृत्सन्निधौ तदनुष्ठानम्॥
दशमाधिकरणमारचयति॥

अभ्यस्ते षडहे भुक्तिमभ्यासेन किं न वाऽग्रिमः।
सोऽत्र शस्त्रादिवन्नैव संस्थितेन द्विधानतः॥ १४॥

आवृत्तं पृष्ठ्यमुपयन्तीति। श्रूयते तेन तत्र षडहावृत्तौ यथा स्तो
त्रादीन्यावर्तन्ते तथा मधुभोजनमपीति प्राप्ते ब्रूमः। संस्थि-
ते षडहे भोजनं विधीयते संख्यानामपुनः षडह विशेषव्या
पारभावः। अतः षडहावृत्तेरन्ते मधुभोजनं सकृदेव का
र्यम्॥ एकादशाधिकरणमारचयति॥

सर्वान्ते प्रतिमासं वा पृष्ठ्यान्ते मधुभोजनम्।
सर्वान्ते पूर्ववन्मैवं संस्थितानां पृथक्कृत्वतः॥१५॥

गवामयने श्रूयते चत्वारोऽभिप्लवाः षडहाः पृष्ठ्यः षडहः समासः स द्वितीयः स तृतीयः स चतुर्थः स पञ्चम इति। तत्र षडहपञ्चकरूपे मासेऽन्यसमाने पृष्ठ्योऽप्यावर्तते तथा सति पूर्वन्यायेनावृत्तेषु पृष्ठ्येषु सर्वेषु समाप्तेष्वन्ते भोजनमिति प्राप्ते ब्रूमः। प्रतिमासं संस्थितानां पृष्ठ्यानां पृथक्कृत्वाद् भोजनमपि प्रतिमासमावर्तनीयम्॥

द्वादशाधिकरणमारचयति॥

मध्वभक्ष्यं भक्ष्यते वा सत्रिभिर्ब्रह्मचारिणः।
निषिद्धत्वादादिमोऽन्त्यः पुंक्रत्वर्थविभेदतः॥१६॥

सत्रात्मके द्वादशाहे पृष्ठ्यषडहे संस्थिते मध्वभक्ष्यं कुतः सत्रिणां दीक्षितत्वेन ब्रह्मचारित्वाद् ब्रह्मचारिणश्च मधुमांसप्रतिषेधादिति चेन्मैवं तन्निषेधस्य पुमर्थत्वेन भक्षणविधेन क्रत्वर्थेन विषयभेदात् तस्मात् सत्रिभिर्भक्ष्यम्॥

त्रयोदशाधिकरणमारचयति॥

मानसं किमहर्भिन्नमङ्गं वा दशमेऽहनि।
भिन्नं स्तुत्यादिना नाङ्गं तद्विसर्गोक्त्यादिभिर्भवेत्॥१७॥

द्वादशाहे मानसं ग्रहणं श्रूयते। अनया त्वा पृथिव्या पात्रेण समुद्रं रसया प्रजापतेर्जुष्टं गृह्णामीति मानसं प्राजापत्यं गृह्णातीत्ययमर्थः पृथिव्या पात्रं समुद्रः सोमः तद्रसः प्रजापतिर्देवता सर्वविशिष्टस्य ग्रहस्य ग्रहणे मनः साधनं तदिदं मानसमिति सत्तच्च द्वादशेभ्यो भिन्नमहस्त्रयोदशेऽहनि कर्तव्यो यागविशेषः। कुतः स्तुत्यादिभ्यः मानसेन द्वादशाहस्य स्तुतिरेवमाम्नायते द्वादशाहस्य हतरसानि छन्दांसि तानि मानसेनाप्याययन्तीति स्तुतिसाधनञ्च मानसं स्तोत-त्वाद् भिन्नं भवितुं युक्तं तथा व्यपदेशो भेदोऽपि श्रूयते वाग् वै द्वादशाहो मनो मानसमिति एवं तावदुपपत्तिभिर्भिन्न-

महरिति प्राप्ते ब्रूमः। दशमस्याह्नोऽङ्गं न तु स्याद्विसर्गोन्त्यादिभ्यः एष वै दशमस्याह्नो विसर्गो यन्मानसमिति विसर्गोक्तिः। इयञ्च दशमाङ्गत्वं गमयति अहरन्तरत्वे द्वादशाह समाख्या च विरुध्यते अङ्गभूतेनापि मानसेन स्तुतिव्यपदेशादिकमुपपद्यते तस्मादङ्गम्॥

चतुर्दशाधिकरणमारचयति॥

सत्रमेकः करोत्याहो बहवः प्रकृताविव।
एकः कुर्यादिहासीरन्नित्युक्तावहवो मताः॥१९॥

द्वादशाहसत्रस्य ज्योतिष्टोमः प्रकृतिस्तत्र कर्त्रैकत्वाच्चोरकेन सत्रेऽपि कर्त्रैकत्वे प्राप्ते प्रत्यक्षवचनाद्बहवोऽभ्युपेयाः॥

पञ्चदशाधिकरणमारचयति॥

ऋत्विजोऽन्येऽत्र यष्टृभ्यः स्युस्त एवोत चोदकात्।
अन्ये यष्टार एवस्युः प्रत्यक्षवचनादिभिः॥१९॥

अत्र सत्रे किं यजमानेभ्यो व्यतिरिक्ता ऋत्विजः कर्त्तव्याः किं वा यजमाना एवर्त्विजः। ज्योतिष्टोमे यजमानादन्येषामृत्विक्त्वादन्ये स्युरिति प्राप्ते ब्रूमः। ये यजमानास्ते ऋत्विज इति प्रत्यक्षवचनाद्दक्षिणानि सत्राणीत्याहुरिति दक्षिणाराहित्यश्रवणादध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति। तत उद्गातारमित्यादिना ब्रह्मोद्गात्रादिसमाख्यासंयोगदीक्षासंयोगयोरार्त्विज्ययाजमानद्योतकयोः प्रतिभानाच्च यजमाना एवर्त्विजः॥

षोडशाधिकरणमारचयति॥

अहीनसत्रयोर्लक्ष्मभेदो नास्त्यस्ति वा नहि।
आवृत्तिसाम्यादाद्यः स्याद्विज्याभिख्यां ततो भिदा॥१९॥

अस्ति द्वादशाहस्याहीनत्वं सत्रत्वञ्च। तत्रैवं चिन्त्यते किमहीनसत्रयोर्लक्षणभेदो नास्त्यतास्तीति तावत्प्राप्तं कुतः ज्योतिष्टोमा᳒वृत्तिरूपस्य समानत्वात् यथा द्विरात्रादीनामेकादशरात्रान्तानामहीनानामावृत्तो ज्योतिष्टोम-

स्वरूपं तथा तयोर्दशरात्रादीनां सत्राणामिति प्राप्ते ब्रूमः।
आसीरन्नुपेयुरिति चोदनाद्वयं यजमानबहुत्वस्य सत्रल-
क्षणं यजति चोदनाया यजमानबहुत्वनियमाभावश्चाहीन-
लक्षणं वैदिकप्रयोगेषु तयोरव्यभिचारात् इति राद्धान्तः॥

सप्तदशाधिकरणमारचयति॥

अयुतादि प्रत्यहं स्यात् सकृद्वाप्यनुसारतः।
आद्यो भवेत् प्रयोगाङ्गो तदैक्ये न सकृद्भवेत्॥२०॥

अस्ति पौण्डरीकः पौण्डरीके एकादशरात्रेण स्वाराज्यका-
मो यजेतेति तद्विधानात् तत्र श्रूयते अयुतं पुण्डरीके देया-
दश्वसहस्रमेकादशमिति तत्र गवायुताश्वसहस्रे प्रत्यह-
दातव्ये कुतः दक्षिणाया अहरङ्गत्वेन प्रतिप्रधानमावर्त्तनी-
यत्वादिति प्राप्ते ब्रूमः अहर्गणरूपस्य पौण्डरीकस्य प्रयो-
गो दक्षिणाङ्गं प्रत्यङ्गी सचैकः ततः सकृदेव दानम्॥

अष्टादशाधिकरणमारचयति॥

सकृत् किं प्रत्यहं वास्य नयनं तत्र चोत्तमे।
सर्वस्याविभक्तस्य सकृत् संस्कारसिद्धितः॥२१॥

प्रतिमाध्यन्दिनं चोदकप्राप्तेः प्रत्यहं तदा सर्वं नेयं तदेक-
त्वाद्विभज्य द्वादशाहवत् पौण्डरीके सकृदेव दानस्य गवायु-
ताश्वसहस्ररूपं दक्षिणाद्रव्यं यदस्ति तस्य नयनादिसंस्का-
रश्चोदकप्राप्तः प्रकृतौ माध्यन्दिने सवने दक्षिणा नीयन्त इ-
ति तद्विकृतित्वेन नयनमिह सकृत् कार्य्यं किंवा प्रत्यहमि-
त्येकः संशयः। तयोरुत्तमे पक्षे प्रत्यहं किं दक्षिणाद्रव्यस्य
सर्वस्य नयनं किंवा दशसहस्रगवामेकैकं सहस्रमेका-
दशेऽह्नि अश्वस्य सहस्रमिति द्वितीयः संशयस्तत्र सकृ-
न्नयनमिति तावत्प्राप्तं कुतः तावतैव चिकीर्षितसंस्कार-
स्य सिद्धत्वात्। अथवा प्रतिमाध्यन्दिनसवनं चोदकप्राप्तेः
समानत्वात् प्रत्यहं नयनं कार्य्यं तदापि गवायुताश्वसह-
स्ररूपस्य द्रव्यस्यैक दक्षिणारूपत्वात् सर्वं नेयमिति पूर्वः

पक्षः। विभज्य नेयं कुतः द्वादशाहविकृतित्वात् द्वादशाहे-
चान्वहं विभज्य नीतत्वादिति राद्धान्तः॥

एकोनविंशाधिकरणमारचयति॥

मनोतर्चः सामिधेन्यः सर्वाः पञ्चदशैव वा।
अविशेषेण सर्वाः स्युः कार्य्याः पञ्चदशैव ताः॥२२॥

क्वचिद्विकृतिविशेषे श्रूयते मनोतर्चः सामिधेन्यो भवन्ती-
ति तत्र विशेषाश्रवणादृचो यावन्त्यो मनुसमन्धिन्य ऋक्-
संहितायामाम्नातास्ताः सर्वाः सामिधेन्य इति प्राप्ते ब्रूमः।
अग्निसमिन्धनमासामृचां कार्य्यं तच्च प्रकृतौ पञ्चदश-
भिः सिद्धमित्यत्रापि चोदकवशात् पञ्चदशैवोपादेयाः॥

विंशाधिकरणमारचयति॥

उपावहरणं मानमपि क्वाप्युत वाससि।
क्वापि स्यात्तत्प्रशस्तानां भावाद्वचनाद्वाससोभयम्॥२३॥

ज्योतिष्टोमे सोमस्योपावहरणं मानञ्च श्रुतं तदुभयं सम्पाद-
नप्रयत्नेन विना स्वत एव लब्धेन केनापि साधनेन कार्य्यमे-
वम्। वाससि मिनोति वाससा चोपावहरतीति वचनेन वा-
ससो विहितत्वात्॥ एकविंशाधिकरणमारचयति॥

नान्यह्रासोऽहर्गणे स्यात् स्याद्वा न स्यादनुक्तितः।
चोदकात् प्रत्यहं प्राप्तेः कार्य्यो ह्रासोऽन्तरं भवेत्॥२४॥

द्वादशाहादावहर्गणे चोदकप्राप्तादेकस्मान्मानोपावहरणहे-
तोर्वाससोऽन्यह्रासोऽनुक्तत्वान्न सम्पाद्यमिति प्राप्ते ब्रूमः। प्र-
त्यहं सोमस्योपावहरणं चोदकेन प्राप्तं तच्चोपावहरणरूपं-
कार्य्यं वासोभेदं विना न सिध्यति। हविर्धान शकटेऽवस्थिता-
द्वासोपनीतसोमात् कियन्तमपि सोमभागमेकैकस्याह्नः प-
र्य्याप्तं पृथक्कृत्योपावहर्त्तुं वासोऽन्तरं सम्पाद्यम्॥

द्वाविंशाधिकरणमारचयति॥

तत्र किं सा नेहृतौ वाद्यः प्रकृतावेकतेक्षणात्।
अर्थात्तदैकान्त न्वोक्तयाहृतौ स्यात् साधकत्वतः॥२५॥

यदेतद्वासोऽन्तरमहर्गणे सम्पाद्यं तत् किं मानकाले उ
तोपावहरणकाल इति संशयः। प्रकृतौ मानोपावहरण
योर्वस्त्रैकत्वदर्शनादिहापि तदैकसिद्धये मानकाले वा
सोऽन्तरं सम्पाद्यमिति पूर्वः पक्षः। प्रकृतौ येन सोमो मितस्ते
नोपावहरणमर्थसिद्धं क्रियाने व सोमः शकटेऽवस्थाप
नीयः क्रियाने वोपाहर्तव्यः इति सोमद्वयाभावादर्थसिद्धस्य
चैकवासस्त्वे वाचनिकत्वाभावान्न चोदकेनातिदेशोऽस्ति
। अतोऽहर्गणे माने हेतोर्वासः शकटेऽवस्थितत्वादुपावह
रणे वासोऽन्तरस्य सार्थकत्वात् तत्समये सम्पाद्यम्॥

इति माधवीये जैमिनीयन्यायमालाविस्तरे दश
माध्यायस्य षष्ठः पादः समाप्तः॥

---

सप्तमपादस्य प्रथमाधिकरणमारचयति॥

पशुः कृत्स्नो हविः किं वा प्रत्यङ्गं हविरन्यता।
आद्यश्चोदनया मैवमवदानपृथक्त्वतः॥१॥

अग्नीषोमीयं पशुमालभेतेत्यत्र कृत्स्नस्य पशोरेकहवि
ष्ट्वं युक्तं कुतः। अग्नीषोमदेवतां प्रति द्रव्यत्वेन पशोश्चोदित
त्वात् नहि हृदयाद्यङ्गं साक्षात् पशुर्भवतीति प्राप्ते ब्रूमः।
हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसोऽवद्यति पा
र्श्वयोरवद्यतीत्यादिना हृदयाद्यङ्गानामवदानानि पृथगा
म्नायन्ते। अवदानञ्च हविष्ट्वप्रयोजकः संस्कारः पुरोडाशा
दौ होतुमवदीयमानत्वदर्शनात् हविःशब्दश्च कर्मव्युत
पत्त्या होमयोग्यं द्रव्यं ब्रूते। पश्वाकृतिचोदनात् हृदयाद्यङ्ग
द्वारेण देवतासम्बन्धादुपपद्यते। तस्मात् प्रत्यङ्गं हविर्भेदः
॥ द्वितीयाधिकरणमारचयति॥

एकेनाङ्गेन सर्वैर्वा यद्देकादशभिर्यजिः।
एकेन यागसंसिद्धेर्हविषाभेदतोऽखिलैः॥२॥
एकादशभिरन्येषां परिसंख्या भवेद्यतः।

नत्रिदोषागत्यभावादश्रुतोक्तेश्च सोविना ॥३॥

पश्वङ्गं हविर्भेदे स्थिते सति तेषां यागे संशयः तत्रानिर्दिष्टविशेषेण येनकेनाप्यङ्गेन यागः कार्य्यः तावतैवयागस्य सिद्धत्वात् इत्येकः पक्षः। चोदितं पश्वङ्गत्वं परिगणितेषु हृदयादिष्वन्येषु चांसशिरःप्रभृतिषु समानं ततो हृदयादिवदंसादेनोहविर्भेदत्वाद्यागमन्तरेण हूयमानत्वलक्षण हविष्ट्वापर्य्यवसानात् सर्वैरङ्गैर्योगइतिद्वितीयः पक्षः। हृदयादिभिरेकादशभिरेवाङ्गैर्योगः कर्तव्यः। कुतोन्येषामंसादीनां परिसंख्यातत्वात् चोदकेन सर्वेषामङ्गानामवदाने प्राप्ते हृदयादिवाक्येनांसादयः परिसंख्यायन्ते। ननु परिसंख्या या विधिःस्वार्थं जह्यात् परार्थं कल्पयेत प्राप्तं बाधेतेति दोषत्रयं प्रसज्येत। प्रसज्यतां नामसतिहि गत्यन्तरे एषां दोषत्वं परिसंख्यायास्तु तेत्रयः स्वरूपमिति कृत्वा न दोषता भजन्ते। किञ्च हूयानि मांसान्यभिमृशन्ति शृतान्यशृतानीति केषाञ्चिन्मांसानामपक्वत्वमुच्यते। पाकस्तु हविषो मांसस्यप्रतिनियतस्तस्मादशृतत्वोक्तिरंसादिपरिसंख्यागमयति। एतदेवाभिप्रेत्यांसादिप्रतिषेधः सूत्रे वर्णितः। नांसयोरवद्यति न शिरसि इत्यादिना तस्मादेकादशभिरेव यागः॥

तृतीयाधिकरणमारचयति॥

इज्याशेषैरशेषैर्वान्यङ्गैः स्विष्टकृतोहुतिः
आद्यःप्रकृतिवन्मैवं पूर्वार्धैस्तुक्तिशेषतः ॥४॥

पशौ श्रूयते अङ्गैः स्विष्टकृतं यजतीति तत्रेज्यार्थानां हृदयाद्येकादशाङ्गानां यैःकैश्चिदङ्गैरिज्याशेषभूतैः स्विष्टकृद्धोतव्यः कुतः प्रकृताविज्याशेषेण पुरोडाशेन स्विष्टकृतो हुतत्वात् यत्रापि चोदकेन तथात्वादिति प्राप्ते ब्रूमः। दोष्णः पूर्वार्धादवद्यति गुदस्य मध्यतः श्रोण्या जघनतइति वाक्यशेषेण हृदयादिभ्य एकादशभ्योऽन्यानि त्रीणि अङ्गानि स्विष्टकृते समाम्नायन्ते न च हृदयादिष्वपि गुदादीन्याम्नातानीति

शङ्क्यं तद्विशेषस्य कल्पसूत्रकारेण दर्शितत्वात्। हृदयं-जिह्वा वक्षो यकृद्वृक्कौ सव्यदोरुभे पार्श्वे दक्षिणा श्रोणिर्गुदं तृतीयमिति दैवतावदानानि दक्षिणोऽंसः। सव्या श्रोणिर्गुदं तृतीयमिति सौविष्टकृतानीति तस्मादनिज्याशेषैरड्डैः स्विष्टकृद्धोमः॥ चतुर्थाधिकरणमारचयति॥

होतुर्नियम्यते ऽध्वर्युर्ग्नी किं वेडां विकरोति सा।
अनस्थिभिरिति प्राप्ता होतुः पक्षे नियम्यते॥५॥
अनुवादोऽनस्थिवाक्यं प्राप्तिर्नापरिशिष्टयोः।
नाग्नीत्तत्र तेनेडा होतुर्विक्रियते तया॥६॥

पश्वावेव श्रूयते अध्वर्युर्ग्नी होत्रे हरतीति अध्वर्युर्ग्नीहृदयादिभ्योऽन्यदङ्गं तत्रेयं होतुरेव नान्यस्येति नियम्यते। कुतः पक्षे प्राप्तत्वात् तथाहि हृदयादीनिज्याशेषान् भक्षणार्थं पात्रे निक्षिप्यानिज्याशेषानपि तत्र निक्षिपेत्। अनस्थिभिरिडां वर्धयन्तीति श्रवणादस्मिंश्च भक्षणे प्रत्येकमृत्विजो विभज्यमाने सेयमध्वर्युर्ग्नी होतुः कदाचित् प्राप्नोति कदाचिदन्यस्य ततो नियन्तव्येति प्राप्ते ब्रूमः वर्द्धयन्तीति वर्तमानोपदेशेनानस्थिवाक्यमनुवादः। प्रापकन्तु परिशिष्टवाक्यं तच्चैव साम्नायते। अथ यद्यत् परिशिष्यते तत्तत् समवत्तधान्यामानयति हृदयं जिह्वा वक्ष इत्यारभ्य वनिष्टुमित्येतदन्तं नच तस्मिन् वाक्ये ऽध्वर्युर्ग्नी पठिता ततो ऽप्राप्तत्वात् द्वितीयमानतया होतुरिडाभागो ऽन्यो वाध्यते। तत्रेयं वचनव्यक्तिः यद्धोत्रे हरन्ती तदध्वर्युर्ग्नीमिति तस्मात् विकारः॥
पञ्चमाधिकरणमारचयति॥

वनिष्टुरपि तद्वत्स्यात् प्राप्तिः स्यादन्तो यदि।
इडासंस्कार एवायं भक्षो विक्रियतेऽत्र तः॥७॥

पश्वावेव श्रूयते वनिष्टुमग्नीधद्दातीति अध्वर्युर्ग्नीवद्वनिष्टुरपि हृदयादिष्विति विक्रमङ्गं ततः संशयपूर्वो तत्र पक्षास्तद्वदीज्याः। अधिकाशङ्का तेषादिडापात्रे हृदयादि प्रासनवाक्ये-

यनिष्टुरपि पठितः। ततः पक्षे प्राप्त एव नियम्यत इति उप
स्तरणादिवत् प्राशनमिडायाः संस्कार एव नत्वेतावता व-
निष्टाः पक्षे प्राप्तिरित्यप्राप्तविधेः पूर्ववद्विकार इत्युक्तशङ्का
यामुत्तरम्॥ षष्ठाधिकरणमारचयति॥

मैत्रावरुणनाम्नोऽत्र भक्षो नास्त्यस्ति वा न हि।
अप्राकृतत्वादध्वर्युहोत्रन्तर्भावतो हि सः॥ ७॥

तत्र पशौ मैत्रावरुणनाम्न इडाभक्षो नास्ति कुतः प्रकृतौ
मैत्रावरुणस्याभावेन चोदकप्राप्त्यभावात् नैवम्। मैत्रा
वरुणः प्रेष्यति चान्वाहेति प्रैषानुवचने तस्य विधीयते
। तत्र प्रैषानुकार्येणाध्वर्य्यावन्तर्भावः अनुवचनका-
कार्येण च होतरि तस्मादस्ति भक्षः॥

सप्तमाधिकरणमारचयति॥

द्विभाग एकभागो वा द्विभागस्याद्विकर्मतः।
एकः स्यान्मैकतानो चेद्वैषम्यप्रसक्तावपि॥ ८॥

स मैत्रावरुणः कर्मद्वयोपाधिना द्विभाग इति चेत् न पुरु
षैकोपाधिना भागस्याप्येकत्वात् अन्यथा प्रसक्तावपि कर्म
तारतम्यानुसारेण भागतारतम्यं प्रसज्येत ॥

अष्टमाधिकरणमारचयति ॥

प्रतिप्रस्थातुरत्रास्ति भक्षो नो वा वपामसौ।
पचत्यतोऽस्ति नो पक्वा वपा सर्वाहुता यतः॥ ९॥

अत्र पशौ प्रतिप्रस्थातुरिडाभक्षोऽस्ति कुतः। अध्वर्यु क-
र्मणो वपापाकस्य तेन कृतत्वात् मैवं भक्ष्यमितु वपाशेषस्या
भावात्॥ नवमाधिकरणमारचयति ॥

गृहमेधीयके त्वाज्यभागादिष्वनुवादगीः।
सचोदकविधिर्वाथबाधो वाधिककर्म वा॥ १०॥
परिसंख्यातसङ्कोचश्चोदकोऽन्यत्र वात्र वा।
अपूर्वे गृहमेधीयस्याह्वानोऽनुप्रचोदकम्॥ ११
अनुवादः पुनः स्तुत्या द्वितीयः सार्थतावशात्।

निर्वापवच्चोदकस्य लिङ्गत्वेन सहाप्यकृत्।।१२।।
ओदनेनैव तन्न सिद्धेरैष्टिकस्य प्रशंसनम्।
विध्येकवाक्यता नास्ति तेनात्राङ्गान्तरे विधिः।।१३।।
प्रत्यभिज्ञानतोऽङ्गस्य परिसंख्येन तस्य हि।
चोदकस्य ससङ्कोचो ह्यङ्गान्तरपरो मतः।।१४।।
व्यापारैकाच्चोदकस्य स्वार्थसंग्रहणं भवेत्।
वैरूप्याच्च निरर्थत्वादपूर्वं कर्म युज्यते।। १५।।

आज्यभागेति नाम्नोपकारकृत्स्मृतेरिह नामनास्तिसमं न स्मात्तु प्यतेनेन चोदकः मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं मोदनमिति विहिते गृहमेधीये श्रूयते आज्यभागौ यजतीति तत्राष्टधा संशयः। चोदकप्राप्तयोरेवाज्यभागयोरिह पुनः श्रवणादनुवादोऽयमित्याद्यः पक्षः तथा सति वैयर्थ्यप्रसङ्गात् ततः सार्थकत्वाय चोदकेन द्वाक्ययोर्मिलितयोरत्राज्यभागविधायकत्वमभ्युपेतव्यम् ओषधिद्रव्यनिर्वापादयो यथा प्रकृतिगताः सन्तो विकृतावपि श्रूयमाणाश्चोदकस्य लिङ्गं तथाज्यभागावपि लिङ्गत्वेन सहापकृतौ ततो मिलितयोर्विधायकत्वमिति द्वितीयः पक्षः। गृहमेधीयविधिवाक्ये श्रुतस्यौदनस्यैवौषधिद्रव्यतया लिङ्गत्वसिद्धेर्नास्ति लिङ्गान्तरापेक्षा तस्मात् प्रकृतौ विहितत्वादाज्यभागकर्मण इह पुनः श्रवणमर्थवादत्वेन तत् प्रशंसार्थमिति तृतीयः पक्षः। भिन्नप्रकरणे श्रुतस्य विध्येकवाक्यत्वायोगादर्थवादत्वमयुक्तं ततश्चोदकप्राप्तादाज्यभागादिकर्मणोऽधिकमाज्यभागरूपमङ्गान्तरं विधीयत इति चतुर्थः पक्षः। ऐष्टिकयोराज्यभागयोरिह प्रत्यभिज्ञानान्नाङ्गान्तरं युक्तम् तस्मादाज्यभागव्यतिरिक्तस्य प्रयाजाद्यङ्गस्य परिसंख्यानार्थमिदमाज्यभागवचनमिति पञ्चमः पक्षः। आज्यभागवाक्येन तद्विधिरूपस्वार्थस्त्यज्येत प्रयाजादिनिषेधरूपोऽन्यार्थः परिगृह्येत चोदकप्राप्तश्च प्रयाजाद्यनुष्ठाने बाध्येतेति दोषत्रय

प्रसंगात्त्व परिसंख्यायुक्ता। तेन प्रत्यक्षरूपात्तस्मादाज्यभा
गवाक्यादानुमानिकश्चोदकवाक्यमाज्यभागव्यतिरिक्त-
प्रयाजाद्यङ्गेषु सङ्कोचनीयमिति षष्ठः पक्षः। यद्विचोदक
प्राप्तस्य प्रत्यङ्गं पृथग् व्यापारांस्तु तदा प्रयाजाद्यङ्गगोच
रैर्व्यापारैस्तेषामतिदेशः सिध्यति आज्यभागगोचरस्यानेन
प्रत्यक्षविधिना बाधितत्वात्त चोदकेनाज्यभागातिदेश
इत्येवं सङ्कोचो वर्णयितुं शक्यते इह तु प्रधानकर्मणां विरस्य-
व्यापाराभावादिति न्यायेनैक एव चोदकस्य व्यापारः। न
चास्ति युगपदतिदेशोऽनतिदेशश्च विरुद्धधर्मः प्रसज्ये
त तस्मात् प्रयाजाद्यङ्गेषु सङ्कोचो न युक्तः। तेन चोदकोऽत्रा-
ज्यभागकर्मणि सङ्कोचनीयः। न चोक्तदोषापत्तिः अस्य स
ङ्कोचस्योपसंहाररूपत्वात् आज्यभागयोरेव शक्तस्य चोदक
स्य ज्ञानं शक्तिज्ञानमुपसंहारः। तथा सत्याज्यभागातिदेशव्या
पृतस्य चोदकस्य को नामातिदेशनिवृत्तिरूपविरुद्धधर्मप्रस
ङ्गः। तत्राज्यभागकर्मणि चोदकावस्थानमिति सप्तमः पक्षः
पुरोडाशश्चतुर्द्धा करोत्याग्नेयञ्चतुर्द्धा करोतीत्यनयोरुभयो
रपि प्रत्यक्षवचनत्वे सरूप त्वादत्रोपसंहारः इह तु प्रत्यक्ष
परोक्षयोर्वचनचोदकयोर्विरूपत्वान्नासौ युक्तः। किञ्च प्र
त्यक्षवचनेनैवाज्यभागविधिसिद्धेश्चोदककल्पना निरर्थि-
का तस्मादुपसंहारो न युक्तः। तस्मादपूर्वो गृहमेधीयो न चोद
केनान्यान्यङ्गानि गृह्णातीति कर्त्तव्यताकाङ्क्षां तु प्रत्यक्षवचने
नैव पूर्य्यते। एवं सति उक्तदोषत्रयाभावादष्टमः पक्षोऽभ्युप
यः। ननु सांग्रहण्यामिष्टौ प्रत्यक्षवचनविहितैरामनहोमैः
सह चोदकातिदिष्टानामनुयाजानां समुच्चयोऽङ्गीकृतस्तद्व
दत्रापि विधीयमानयोराज्यभागयोश्चोदकप्राप्तप्रयाजाद्य
ङ्गैः सर्वैः सह समुच्चयोऽस्तु न वैषम्यात् प्रकृतावाज्यभाग
योरुपकारः क्लृप्तः सोऽत्र नामसाम्येन स्मार्य्यते तत्र क्लृप्तो
पकारैरनुयाजाद्यङ्गैश्चोदकेन सह सातिदिष्टैः संपूर्य्यते तेन

नो विधिवैयर्थ्यपरिहाराय मनहोमेषु उपकारे कॢप्ते सति
पश्चात् प्रवर्तमानः प्रयोगवचनः समुच्चित्यानुष्ठापयति।
तत्रो वैषम्यात् कॢप्तोपकाराज्यभागविधायकेनानेन म-
न्त्रवचनेन गृहमेधीये चोदको लुप्यते तस्मादविकृतरू-
पं साङ्गम् अपूर्वं कर्मान्तरमत्र विधीयत इति राद्धान्तः॥

दशमाधिकरणमारचयति॥

तत्रान्यदङ्गं नो कार्यं कार्यं वान्यानपेक्षणात्।
न कार्यं विहितत्वेन कार्यं स्विष्टकृतादिकम्॥१६॥

तत्र गृहमेधीये आज्यभागाभ्यामेव निराकाङ्क्षत्वादिडा-
स्विष्टकृदादिकं न कार्यमिति चेन्न। आज्यभागवद्धि हि
तत्वादग्नये स्विष्टकृते समवद्यतीति इडामुपह्वयत इति
विहितं तस्माद्यावदुक्तं कार्यम्॥

एकादशाधिकरणमारचयति॥

तत्रैव परिसंख्याते प्राशित्राद्यस्ति वा न वा।
अस्तीडादर्शनान्मैवं तदुक्तात्रास्तु नेतरत्॥१७॥

गृहमेधीये स्विष्टकृदाज्यभागवदृष्ट्वा संशयं हृदि निधाय
परिसंख्यार्थं पञ्चमं पक्षमभ्युपेत्येवं कृत्वा चिन्ता तत्र प्रा-
शित्रादिभक्षणं न परिसंख्यातं तदस्ति कुतः भक्षणार्थस्ये-
डोपाह्वानस्य तत्र दर्शनादिति प्राप्ते ब्रूमः। अत्र गृहमेधीये
तदिडाभक्षणं वचनबलेनास्तु स्विष्टकृद्द्वारा प्राप्तिस्य प-
रिसंख्यातस्य वचनेन निवारितत्वादितरत् प्राशित्रादिभ-
क्षणं परिसंख्यातत्वान्नास्ति॥

द्वादशाधिकरणमारचयति॥

प्रायणीयातिथ्ययोः किं विकल्पः शंय्विडान्तयोः।
नियमो वा विकल्पः स्यान्निषेधपरिसंख्यया॥१८॥
शंय्विडान्तत्ववाक्याच्च नियमो विधिमात्रतः।
नित्यानुवादे वैवाक्यं बाहुल्यं दोषमन्यथा॥१९॥

ज्योतिष्टोमे श्रूयते शंय्वन्ता प्रायणीया सन्तिष्ठते न पत्नीः सं-

याजयन्ति इडान्तानिष्ट्या सन्तिष्ठते नानुयाजान् यजन्तीति प्रकृतौ यस्तोहोता तच्छंयोरिति मन्त्रं जपति तदानीमध्वर्युः परिधीनग्नौ प्रक्षिपति तदाह कल्पसूत्रकारः। अनूच्यमाने शंयुवाके आहवनीये परिधीन् प्रहरतीति ततो हविःशेषेषु भक्षितेषु पत्नीः संयाजयन्तीति क्रमस्तथा प्रधानयागानामिष्टहोमप्राशित्रादिभक्षणेडाभक्षणानुयाजसूक्तवाकशंयुवाका इत्यध्वस्तनः प्रयोगक्रमः पत्नीसंयाजानामुपरि-फलीकरणहोमप्रायश्चित्तहोमकपालोद्वासनैरिष्टिः समाप्यते। सवंस्थिते विकृतिरूपायाः प्रायणीयेष्टेः संयुवाकान्तत्वमानिष्ट्येष्टेरिडाभक्षणान्तत्वञ्च विकल्पितं स्यात्। कुतः निषेधवाक्यविधिवाक्याभ्यां प्रकारद्वयप्रतीतेः तथाहि शंय्वन्तत्वेडान्तत्वविधिर्नैवोपपन्नः पत्नीसंयाजानुयाजनिषेधे पुनर्निषेधवचनं परिसंख्यार्थं पत्नीसंयाजानुयाजव्यतिरिक्ते नास्ति निषेध इति परिसंख्यानेन प्रकृतिवद्यथाप्राप्तं कपालोद्वासनान्तत्वमनयोरिष्ट्योः प्रतीयते विधिवाक्येन च शंय्विडान्तत्वं तेन व्रीहियववद्विकल्प इति प्राप्ते ब्रूमः। विधिमात्रस्यात्र प्रवृत्तेः शंय्वन्तत्वमिडान्तत्वञ्च तयोः प्रति नियतं पत्नीसंयाजाद्यभावस्त्वर्थसिद्धस्ततो नञ्पदप्रयुक्तमुपरितनं प्रतिषेधवाक्यं नित्यानुवादः पत्नीसंयाजाद्यकरणाल्लाघवं भवतीति अन्यथा बहवो दोषाः प्रसज्येरन् विकल्पे तावदष्टौ दोषाः प्रसिद्धाः। परिसंख्यायाञ्च त्रयो दोषाः विधिपरिसंख्याभ्यां वाक्यभेदोऽपरो दोषस्ततः शंय्विडान्तत्वं नियतम्॥ त्रयोदशाधिकरणमारचयति॥

तत्रैव शंय्विडे पूर्वैः परैर्वास्त्विच्छयाऽथवा।
परैरेवाथवा पूर्वैरेवाद्यो हि विधिश्रुतेः॥२०॥
निषेधस्यार्थवत्त्वाय परैरेवानुवादगीः।
पूर्वोक्तवाक्यतायाति पूर्वैरेवाविरोधतः॥२१॥

प्रायणीयानिष्ट्ययोरेवान्तत्वेन निर्णीते शंय्विडे पुनः सन्दि-

होते प्रकृतौ द्विविधे शंय्विडे पत्नीसंयाजेभ्यः पुरस्तादुपरि-
ष्टाच्च विहिते ते चात्र चोदकप्राप्ते तत्र द्विविधश्रुतेरर्थे चो-
दनातिदिष्टे सति विशेषनियामकाभावादिच्छया स्वीका-
र्य इत्येकः पक्षः। यदि प्रायणीया पूर्वशंय्वन्तानिष्ट्या च
पूर्वेडान्ता तदानीमन्तत्वविधिनैव ताभ्यां शंय्विडाभ्यामू-
र्ध्वमप्राप्तानां पत्नीसंयाजानामनुयाजानां च वारितत्वा-
न्निषेधो व्यर्थः स्यात् परयोस्तन्त्रत्वे ताभ्यां शंय्विडाभ्यां पूर्व
प्राप्तानां तेषामनिवारणात्तन्निवारणाय सार्थको निषेधः।
तस्मात् पर एव शंय्विडे ग्राह्ये इति द्वितीयः पक्षः। निषेधोऽ-
यं नित्यानुवाद इत्युक्तं स च पूर्वयोः शंय्विडान्तत्वेऽप्येक-
वाक्यतामापाद्यार्थवादत्वेनोपपद्यते। असञ्जातविरो-
धित्वाद्धि पूर्वे शंय्विडे तस्मात्ते एव ग्राह्ये इति राद्धान्तः॥

चतुर्दशाधिकरणमारचयति॥

उपसत्सु निषिद्धेभ्यः शिष्टं सर्वं किमाचरन्।
यावदुक्तमुपादेयोऽस्तु चोदकस्यानिवारणात्।२२
स्रौवाघारः पुनः श्रुत्या शिष्टस्य परिसंख्यया।
अपूर्वोऽर्थस्ततो वान्योऽनुवादोऽत्र निषेधगो॥२३॥

ज्योतिष्टोमे विहितासूपसत्सु पठ्यते प्रयाजास्ता अन-
नुयाजा इति तत्र निषेधात् प्रयाजानुयाजान् वर्जयित्वा-
वशिष्टं चोदकप्राप्तमङ्गजातं सर्वमाचरणीयमिति प्राप्ते ब्रू-
मः। प्रकृतौ विहितस्रौवाघारः पुनरिह विधीयते। स च चो-
दकप्राप्तमन्यत् सर्वमङ्गजातं परिसंचष्टे अन्यथा पुनर्वि-
धानवैयर्थ्यात्। ननु पुनर्विधानं प्रतिप्रसवार्थं अत एव
श्रुतिस्तत्र स्रौवाघारमभावशङ्कानिराकरणपूर्वकं विद-
धाति नान्यामाहुतिं पुरस्ताज्जुहुयादन्यामाहुतिं पुरस्तात्
जुहुयादन्यन्मुखं कुर्यात् स्रुवेणाघारयतीति अयमर्थः।
स्रौवाघारः सर्वत्र यज्ञमुखं तथा सति यदि कश्चिन्मन्दउ-
पसत्प्रयोगादौ स्रौवाघारमकृत्वा तत्स्थाने काञ्चिदन्या

माहुतिं जुहुयात्तदा मुख्यव्यत्यासेन प्रत्यवायमाप्नुयात्। स्रौवाघार आर्द्रीकर्तव्य इति नैतद्युक्तं चोदकप्राप्तस्याघा घारस्य कारणमन्तरेणाकस्मादभावशङ्काया अयुक्तत्वात् तस्मात् परिसंख्यार्थ एव पुनर्विधिः आहुत्यन्तरनिन्दा तु तच्छेषभूतोऽर्थवादः।यदि परिसंख्यात्रिदोषेत्युच्येत तर्हि गृहमेधीयवदपूर्वं कर्मास्तु प्रयाजादिनिषेधो नित्यानुवादः सर्वथा यावदुक्तमन्त्रानुष्ठेयम्॥

पञ्चदशाधिकरणमारचयति॥

किं स्यादवभृथे बर्हिर्वर्जं सर्वमुताचरेत्।
यावदुक्तं प्रयाजानुयाजबर्हिर्निषेधनः॥२४॥
आद्याऽप्सुमन्त्रावित्याज्यभागोक्त्या परिसंख्यया।
अन्यतोऽन्यगुणाप्राप्तेरपूर्वत्वेन वान्तिमः॥२५॥

ज्योतिष्टोमगतेऽवभृथे चतुर्थप्रयाजप्रथमानुयाजरूपौ बर्हियागौ वर्जयित्वा शिष्टं चोदकप्राप्तं सर्वमनुष्ठेयं कुतः। अपबर्हिषः प्रयाजान्यजति अपबर्हिषावनूयाजौ यजतीति बर्हियागद्वयमात्रवर्जनावगमादिति प्राप्ते ब्रूमः। अप्सु मन्तावाज्यभागौ यजतीति परिसंख्यानादुक्तमेवानुष्ठेयं। अथोच्येत चोदकप्राप्तावाज्यभागावनूद्याप्सु शब्दोपेतमन्त्रद्वयरूपस्य गुणस्यात्र विधानान्न परिसंख्येति मैवम्। लिङ्गक्रमाभ्यामेव मन्त्रयोः प्राप्तत्वात् अतः परिसंख्यया गृहमेधीयवदुपसद्वदपूर्वकर्मत्वेन वा यावदुक्तमेवानुष्ठेयम्॥ षोडशाधिकरणमारचयति॥

बृहत्सवःखादिरत्वं विकल्प्यानियता उत ।
विकल्प्याश्चोदकप्राप्तेर्नियताः स्युः पुनर्विधेः॥२६॥

क्वचिद्विकृतौ श्रूयते बृहत्पृष्ठं भवतीति त्रैधातवीये श्रूयते यवमयो मध्यम इति वाजपेये श्रूयते खादिरो यूपो भवतीति तत्र बृहद्रथन्तरयोर्व्रीहियवयोः खादिरवैकल्यादीनाञ्च प्रकृतौ विकल्पितत्वादत्रापि चोदकेन विकल्पिता

इति चेन्न पुनर्विधानवैयर्थ्यात् परिसंख्यानुदृष्टत्वान्न
शङ्का तस्मान्नियताः कोसन्तरन्त्वर्थोन्नि वर्तते।

सप्तदशाधिकरणमारचयति॥

काम्येष्टिषु द्रव्यदेवं प्राकृतं न निवर्तते।
निवर्तते वा न प्राप्ते विकल्पो वा समुच्चयः॥२७॥
उत्पत्तिशिष्टेनैवात्र निराकाङ्क्षत्वतः कुतः।
चोदकः शिष्टएवास्य विषयो योऽत्र वर्तते॥२८॥

ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इत्यादिष्टिषु प्रा
कृतयोरग्निदेवताष्टाकपालद्रव्ययोर्नास्ति निवृत्तिः।कुतः-
चोदकेन प्राप्तत्वाच्छ्रुतयोरपि। शिष्टयोश्च द्रव्यदेवतयोर्वि
कल्पः समुच्चयो वा स्वेच्छया कार्य इति प्राप्ते ब्रूमः। उत्प
त्तस्य यागस्येति कर्तव्यताकाङ्क्षायां पश्चाच्चोदकस्याव
सरः। इह तूत्पत्तिशिष्टाभ्यां द्रव्यदेवताभ्यां यागस्य तद्विषया
काङ्क्षा निवृत्तेर्न तत्र चोदकस्यावकाशोऽस्ति ननु सकृद्-
व्यापृतश्चोदकः क्वचित् प्रवर्तते क्वचिन्निवर्तत इत्येतन्न
सम्भवतीति चेत् माभूत् सम्भवः। न वयं तन्निवृत्तिं ब्रूमः।
किन्तु श्रुताभ्यां द्रव्यदेवताभ्यां अन्यस्याङ्गकलापश्चोदक
स्याविषयस्ततः प्राकृतयोर्द्रव्यदेवतयोरप्राप्तत्वादेव फल
तो निवृत्तिरिति ब्रूमः। तस्माद्दूरापेतौ विकल्पसमुच्चयौ॥

अष्टादशाधिकरणमारचयति॥

औदुम्बरः खादिरेण समुच्चेयोऽथ बाधकः।
द्वयोर्नियोजनाशक्तो निरपेक्षत्वतोऽन्तिमः॥२९॥

पशुकामेनानुष्ठेये सोमापौष्णे पशौ श्रूयते। औदुम्बरो यू
पो भवतीति तत्र चोदकेन प्राप्ते खादिरेण सह श्रूयमाणस्यौ
दुम्बरस्य समुच्चयः कार्यः। कुतः द्वयोर्यूपयोः पशुनियोज-
नसम्भवेन चोदकपरित्यागायोगादिति प्राप्ते ब्रूमः। खादि
रौदुम्बरौ परस्परनिरपेक्षतया पशुनियोजनक्षमौ प्रमा
णबलेन प्राप्तौ तयोः समुच्चयाङ्गीकारे नैरपेक्ष्यं परित्यज्ये

न तस्मादुपदिष्ट औदुम्बरोऽति दिष्टस्य बाधकः॥

ऊनविंशाधिकरणमारचयति॥

किं शुक्लाव्रीहयः पक्षे चोदकप्रापितान्यवान्।
न बाधन्तेऽथ बाधन्ते गुणयोक्तिरतोऽग्रिमः॥३०॥
वाक्यभेदो यागशुक्लगुणयोर्विधितो भवेत्।
विशिष्टस्य विधौ कार्यमेकं वै बाधकास्ततः॥३१॥

सोमापौष्णं त्रैणमेकादशकपालं निर्वपेच्छुक्लानां व्रीहीणामित्यस्य वचसः कामेष्ट्यन्तर्गतत्वाच्चोदकप्राप्तो व्रीहियवविकल्पो न बाध्यते। कुतः अत्यस्य वाक्यस्य व्रीहिवाक्यस्यातिदिष्टप्राप्तिकव्रीह्यनुवादेन शुक्लगुणविधानार्थत्वे सति बाधमन्तरेणोपपन्नत्वादिति प्राप्ते ब्रूमः। यागस्तावदप्राप्तत्वाद्विधेयः तत्र गुणोऽपि यदि पृथग्विधीयते तदा वाक्यभेदः स्यात् ततः शुक्लव्रीहिविशिष्टो यागोऽत्र विधीयते। तथा सत्यतिदिष्टव्रीहियवयोर्यत्कार्यं तदेवोपदिश्यमानशुक्लव्रीहीणां कार्यं ततस्ते व्रीहयः प्रापितान्यवान्बाधन्ते॥

विंशाधिकरणमारचयति॥

वपायामेव किं वान्येष्वपि पञ्चावदानता।
वपोद्देश्यादाद्यपक्षोऽवदानोद्देशतोऽन्तिमः॥३२॥

पशौ श्रूयते यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्येति यजमानविशेषस्य चतुरवत्तित्वं गोत्रभेदेन स्मृतिकारैः पठ्यते। जामदग्न्यवत्सविदावार्ष्टिषेणास्तथैव च। पञ्चावत्तिन एवान्ये सर्वे चतुरवत्तिन इति। सर्वेषां यजमानानां गोत्रविशेषमपोद्य श्रूयमाणमिदं पञ्चावत्तित्वं वपामुद्दिश्य विधानाद्वपायामेवेति प्राप्ते ब्रूमः। अवदानस्य चोदकप्राप्तत्वेन विधेयत्वाभावादवदानमुद्दिश्य विधीयमाना संख्यावदानयुक्तेष्वन्येष्वपि पशुवपयवेषु भवतीति सिद्धान्तः॥ इति माधवीये जैमिनीयन्यायमालाविस्तरे दशमाध्यायस्य सप्तमः पादः समाप्तः॥

अष्टमपादस्य प्रथमाधिकरणमारचयति॥

नार्षेयेन च होतारं नानुयाजेष्वितीदृशो।
विकल्पः पर्युदासेन स्यादाहोवचनद्वयात्॥१॥
अन्याय्यत्वाद्विकल्पस्य विध्यंशः प्रतिषेधयोः।
तेनानुयाजवाक्यस्थस्तदर्थं पर्युदस्यति॥२॥

महापितृयज्ञे चोदकप्राप्तवरणं प्रतिषिध्यते नार्षेयं वृणीते न होतारमिति तथानारभ्यवादे श्रूयते आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त इति तत्रोक्तं यजतिषु ये यजामहं करोति नानुयाजेषु ये यजामह करोतीति तत्र वरुणस्य विधिप्रतिषेधौ चोदकप्रत्यक्षवचनाभ्यां प्रतीयेते ते ये यजामह इति मन्त्रस्य तुल्याभ्यां प्रत्यक्षवचनाभ्यां विधिप्रतिषेधप्राप्तौ तत्र विधायकप्रतिषेधकयोर्द्वयोः प्रमाणयोर्वैयर्थ्ये विकल्प इति प्राप्ते ब्रूमः। अष्टदोषग्रस्तत्वाद्विकल्पो न न्याय्यः। ननु परस्परविरुद्धयोर्विधिप्रतिषेधयोः समुच्चयस्याप्यभावात् कागतिरिति चेत् उच्यते। निषेधत्वेन प्रतीयमानमिदं नेत्यनेन शब्देनोपेतं वाक्यं विधिवाक्यस्यांशो भविष्यति। तथाहि यदि नेत्ययं शब्दः करोतिना सम्बध्येत तदा ये यजामहं न करोत्येवं प्रतिषेधः स्यात् यदि त्वं वृणीत इत्यत्रास्यात प्रत्ययेन सम्बध्येत तदा वरणं न कर्तव्यमिति निषिध्येत न त्वेवं सम्बध्यते किं त्वनुयाजपदेन तस्य धातुना च सम्बध्यते। तथा सत्यनुयाजव्यतिरिक्तेषु यागेषु ये यजामहः कर्तव्यः वरणव्यतिरिक्तम् अङ्गजातमनुष्ठेयमिति ये यजामहवरणपर्युदासेन विधिरेव विशेषितत्वेन सति प्रतिषेधवाक्यस्य कस्यचिदभावान्न विकल्पः शङ्कितुमपि शक्यः॥ द्वितीयाधिकरणमारचयति॥

न सोमेऽध्वर इत्युक्तौ निषेधः पर्युदस्यते॥

उतार्थवादो वाद्यः स्यादसमस्तपदोक्तितः॥३॥
सोमेप्रसक्तिरङ्गेष्टावविकल्पायमग्रिमः।
नैवास्त्यत्र समासस्य नियमः पाणिनेर्मते॥४॥
पुरैतस्मात्सोमयागआज्यभागप्रसक्तितः।
नपर्युदासः किन्त्वर्थवादोदृष्टान्तदर्शनात्॥५॥

दर्शपूर्णमासयोराज्यभागौ प्रकृत्य तौ न पशौ करोतीति नि
षिध्य पश्चान्न सोमेऽध्वर इत्येवमाम्नायते तत्रायं प्रतिषेधः
स्यात्। कुतः नञ्शब्दस्य सोमशब्देन सह समस्तत्वाभावात्। अ
ब्राह्मणमानय अधर्मं करोतीत्यादिषु पर्युदासप्रदेशे
षु समस्तत्वदर्शनात्। अयं तोऽयं नकारः क्रियापदेनान्वितः
आज्यभागानुष्ठानं प्रतिषेधति। ननु पशोरिष्टिविकृतित्वेन
चोदक आज्यभागौ प्रसञ्जयति सोमस्य त्वविकृतित्वान्नास्ति
तत्प्रसक्तिरिति चेत् बाढम्। तथापि सोमाङ्गभूतासु दीक्षणी
यादीष्टिषु या प्रसक्तिः सैवाङ्गिनि सोमे प्रसक्तिर्भविष्यति।
तस्मात् प्रतिषेधः स्यादाद्यः पक्षः चोदकप्रतिषेधाभ्यां दीक्ष
णीयादावाज्यभागौ वा यथोदित्येव विकल्पः स्यात् स चाष्टदो
षग्रस्तः। अतः पूर्वाधिकरणइव पर्युदासोऽस्तु तत्र कात्या
यनमतेन समासनियमेऽपि पाणिनेर्मते नियमः। तस्मा
त् सोमव्यतिरिक्ते कर्मणि आज्यभागौ कर्तव्याविति मध्य
मः पक्षः। यथावरणेषु तदतिरिक्ताङ्गेषु च चोदकेन प्रस
क्तिसाधारण्ये सति वरणपर्युदासेनाङ्गान्तरविषये चोदको
ऽवस्थाप्यते। तथात्रापि पर्युदासवादिना पर्युदासात् पुरा पर्यु
दासनीये सोमेऽन्यत्र च साधारण्येनाज्यभागप्रसक्तिर्वा
च्या सा किमुपदेशात् स्यादतिदेशाद्वा न प्रथमः। प्रकरणे
न दर्शपूर्णमासयोरेव रूढस्याज्यभागोपदेशस्य सोमप्र
सञ्जकत्वाभावात् न द्वितीयः। अन्योन्याश्रयप्रसङ्गात् उ
देशवाक्यार्थे पर्युदासादिना निर्णीते सति पशोश्चोदकस्य
प्रसक्तिः सत्यां च प्रसक्तौ पश्चात् पर्युदासनिर्णयः तस्मा

त्त पर्युदासः।कानर्हि नसोमेऽध्वर इति वाक्यगतिः।उच्यते।नपशौकरोतीत्यस्य निषेधस्यशेषः सदृष्टान्तो वर्ण्यते।यथा ननौ सोमेऽध्वरे तथात्रौ नपशौ कुर्य्यादिति नतोऽर्थवाद इतिराद्धान्तः॥ तृतीयाधिकरणमारचयति॥

नातिरात्रेपर्युदासोवादोवाथनिषेधनम्।
आद्योऽनुयाजवन्मैवंद्विऽन्येकविषयत्वतः॥५॥
अतएवार्थवादोऽपिनस्तुतेःपशुसोमवत्।
निषेधःस्याद्विकल्पोऽत्रव्रीह्यादाविवयुज्यते॥६॥

ज्योतिष्टोमस्य संस्थाविशेषे श्रूयते।अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति तत्र यद्यप्यनुयाजमात्रनिषेध इवानुयाजपर्युदासोऽपि विधेर्निर्विषयत्वं तर्हिन पशौ करोतीत्यत्र नसोम इतिवदर्थवादोऽस्त्विति यथाऽनुयाजेषु ये यजामह इति विधिनिषेधयोः समादेशपर्युदास एव मत्रापीति चेन्न।एकविषयत्वेनव्याहतिप्रसङ्गादतअतिरात्रव्यतिरिक्तेऽतिरात्रे इत्युक्तेः कथं न व्याहन्येत दृष्टान्ते तु विधिः सर्वविषयः निषेधोऽनुयाजमात्रविषयइति।नैवंस्तुत्यस्तावकयोर्विधिनिषेधयोरेकविषयत्वेन व्याहतिनावदस्यात्।अपशवो वा अन्ये गोअश्वेभ्य इत्यत्र पशुत्वनिषेधेन गोअश्वविधेस्तुतिर्दृष्टा इह तु षोडशिनिषेधेन षोडशिन स्तवस्तुतौ स्पष्टो व्याघातः तस्मात् प्रतिषेध इति तृतीयः पक्षोऽस्तु।नचात्रापि व्याघातः शङ्क्यः।अनुष्ठानविकल्पाङ्गीकारेण भिन्नप्रयोगविषयत्वात् सत्स्वप्यष्टसु दोषेषु गत्यन्तराभावाद् व्रीहियववद्विकल्पोऽभ्युपेयः तस्मात् प्रतिषेधइति राद्धान्तः॥ चतुर्थाधिकरणमारचयति॥

जर्तिलाज्यौचतुर्थो किं विकल्पोऽथपयःस्तुतिः।
विकल्पःपूर्ववन्मैवंवाक्यैक्यात्पयसासह॥७॥

अग्निहोत्रे श्रूयते जर्तिलयवाग्वा जुहुयाद्गवीधुकयवाग्वा जुहुयान्न ग्राम्यान् पशून् हिनस्ति नारण्यानथो खल्वाहुः

नाहुतिर्वैजर्तिला गवीधुकाश्च पयसाग्निहोत्रं जुहुयादिति
जर्तिला आरण्यास्तिलाः गवीधुका आरण्या गोधूमाः तयो
रुभयोर्विकल्पः श्रौतस्य वानाहुतिरिति पूर्वयोः पक्षयोर्दू
तत्वाद्धोमाभाव स्तृतीयः पक्षः। नचात्र जर्तिलगवीधुकयोर
नाहुतिविध्येनेन पर्युदासः सम्भवति आहुतिपदान्वितस्य
नञ्पदस्य जर्तिलगवीधुकपदान्वयायोगात् पयोविधि
स्तुत्यर्थः पक्षः। एतेषां परस्परविरुद्धानां चतुर्णां गत्यन्तरा
भावात् षोडशिग्रहणवद्विकल्प इति प्राप्ते ब्रूमः। पयोविधि
नासह जर्तिलादेरेकवाक्यत्वेनार्थवादत्वं युक्तम् ग्रामारण्य
पशुहिंसारहित्येन प्रशस्तयोरपि जर्तिलगवीधुकयोरग्नि
होत्रं प्रत्याहुतित्वं नास्ति पयसस्तु तदस्तीत्यस्य महाभागं प
यस्तूयते तस्मादर्थवादः॥

पञ्चमाधिकरणमारचयति॥

अभिघारनिषेधौ च होमाहोमौ विकल्पिनौ ।
विधास्यमानशेषो वा विकल्पः श्रुतिसाम्यतः॥ ८॥
निषेधस्य विधेश्चात्र मीमांसात्वेन वर्णनात्
समीमांसानुभावार्थवादास्त्वशेषविधित्सिते ॥ ९ ॥

चातुर्मास्येषु त्र्यम्बकमन्त्रसंयोगेन त्र्यम्बकनामका एक
कपालाः पुरोडाशा बहवो विहिताः तान्प्रकृत्य श्रूयते अभि
घार्या अनभिघार्या इति मीमांसन्ते ब्रह्मवादिन इत्यादि आ
धाने श्रूयते होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब
ह्मवादिन इत्यादि। अस्मिन्नुदाहरणद्वये तत्र श्रुतिविचाया
नयोरुदाहरणयोर्विधिनिषेधौ वाचकशब्दाभ्यां श्रूयमाण
त्वात् समानबलौ ततः षोडशिग्रहणाग्रहणवद्विकल्पः। नच
जर्तिलवद्विधास्यमानस्तुत्यर्थत्वं शङ्क्यं दृष्टान्तस्य विषमत्वात्।
दृष्टान्ते स्ववाक्याज्जर्तिलादेरन्यदेव विधास्यमानं पयस्तस्य
स्तुतिर्युक्ता। इह तूपक्रमे विहितावेवाभिघारणहोमौ मीमांस
नौ पुनर्विधीयेते। अभिघार्या एव तूष्णीमेव होतव्यमिति वा

कांशेषयोः पठ्यमानत्वान्न च तेनैव तस्य स्तुतिः सम्भवति
पुनर्विधानन्त्वनुवादत्वेन गुणार्थत्वेन चोपपद्यते निषेधस्य
तु स्तावकत्वं दूरादपेतं नहि तस्यैव निषेधेन तदेव स्तोतुं श
क्यते। तस्माद्विधिनिषेधौ विकल्पार्थाविति प्राप्ते ब्रूमः। इति
शब्देन मीमांसाप्रकारबोधिना विधिनिषेधयोर्मीमांस्यत्वं प्र
तीयते। ततो विधिनिषेधविशिष्टा मीमांसा विधिस्तुत्यर्थेस्तु
त्यै इत्थं महाभागो विधिस्तुत्यर्थो यन्मीमांसया निर्णीतव्य-
इति सूच्यते तस्मादेकवाक्यत्वादर्थवादः॥

षष्ठाधिकरणमारचयति॥

उक्तेयो ब्रह्मगानस्य निषेधो विहितस्तुतिः।
विकल्पितो वा शक्यत्वात्पिवपोत्खेदवत्स्तुतिः॥११॥
विध्यनन्वयतो स्तोत्रं ब्रह्मोद्गानात्तथासति।
विषयैक्याद्विकल्पोऽत्र षोडशिग्रहवन्मतः॥१२॥

आधाने वामदेव्यादिसाम्नां गानानि विहितानि आधाने य
वेदमपरमाम्नायते। उपवीता एतस्याग्नयो भवन्ति। यस्या
ग्न्याधेये ब्रह्मा सामानि गायतीति उपशब्दः सामीप्यं ब्रूते
विगताः कालविलम्बमन्तरेण परित्यक्ता इत्यर्थः। अनया
निन्दया ब्रह्मणः सामगाननिषेधः उद्गातृविहितं वामदे-
व्यादिसामगानं स्तौति। ननु ब्रह्मणः सामगानमप्रसक्तं त
तस्तं निषेधोऽत्यन्तमसम्भावितत्वाच्छशविषाणवच्छून्यः
। नहि वन्ध्यापुत्रो वा तद्वधो वा सम्भावयितुं शक्यते तथा
सति तादृशेन निषेधेन कथं स्तुतिरिति चेत् वपोत्खेदव
दिति ब्रूमः। स आत्मनो वपामुदखिददित्यमेव नात्यन्ता-
सम्भावितार्थेन यथा प्राजापत्यस्य तूपरस्याजस्य विधिः स्तू
यते तद्वदिति प्राप्ते ब्रूमः। नेदं वामदेव्यादिसाम विधीनां-
स्तोत्रं भवितुमर्हति विधीनामनेकत्वेन सर्वस्य स्वसन्निधिप
ठितैरर्थवादैर्निराकाङ्क्षत्वेन च तदन्वया योगात् कात्त-
र्हि सङ्गतिरिति चेत्। उच्यते ब्रह्मशब्दोऽत्र विप्रत्वजातिद्वारे

णोद्गानारंभूते। यस्यच गानं प्रसक्तं तस्मिन्निषेधे सति वि
धिनिषेधाभ्यामेकविषयाभ्या मुद्गातुर्गानं विकल्प्यते॥

सप्तमाधिकरणमारचयति

दीक्षितोनददातीति प्राप्तंसर्वंनिषिध्यते।
अतिदिष्टंपुमर्थंवापुमर्थंचोक्तितोऽग्रिमः॥२३॥
उपदेशार्थवत्त्वायमध्यमो न्यस्तुसन्निधेः।
एकवाक्यत्वलोभश्चेत्पुमर्थंपर्युदस्यताम्॥२४॥

ज्योतिष्टोमे श्रूयते दीक्षितो न ददाति न जुहोति न पचती-
ति तत्र यद्दानादिकं पुरुषार्थे यच्च क्रत्वर्थे तत्राप्युपदिष्टम
तिदिष्टञ्च तेतत्सर्वं प्रतिषिध्यते।कुतः न ददातीत्यादिवचन
स्य सामान्यरूपत्वादित्याद्यः पक्षः।उपदिष्टस्यापि प्रतिषेधे स
ति उपदेशोऽनर्थकः स्यादिति। ततोऽतिदिष्टं पुरुषार्थे चेत्येतदु-
भयमेव प्रतिषिध्यते क्रत्वर्थत्वे नोपदिष्टंदानादिकमनुष्ठेय
मिति मध्यमः पक्षः। नित्याग्निहोत्रदानादिकं पुरुषार्थत्वेन
यत प्रत्यक्षश्रुतावुपदिष्टं ज्योतिष्टोमकालेऽपि प्राप्तं यच्चा
तिदिष्टं दानादिकं तयोरुभयोर्मध्ये प्रत्यक्षोपदिष्टनिषेधस्यो
पदिष्टमेव सन्निहितमिति पुमर्थस्यैवात्र निषेधः नचनि
त्याग्निहोत्रदानादौविधिनिषेधयोःसत्त्वाद्विकल्पःशङ्क्यः
भिन्नविषयत्वात् क्रत्वर्थो निषेधः क्रतुकाले तदनुष्ठानं वार
यति पुरुषार्थस्तु विधिःकालान्तरे तदनुष्ठापयति तस्मात् पु
मर्थस्य निषेधः। यदि प्रतिषेधपक्षे वाक्यभेदःशङ्क्येत तर्हि
पुमर्थदानादि व्यतिरिक्तं क्रतुकालेऽनुष्ठेयमिति पर्युदासोऽस्तु
॥ अष्टमाधिकरणमारचयति॥

विकल्पितोवाध्यतेवाहवनीयःपदादिभिः।
सामान्यस्यविशेषेणप्रत्यक्षोक्तित्वसाम्यतः॥२५॥
लिङ्गचोदकवद्बाधोनास्तितेनविकल्पितः।
विशेषार्थत्वलक्षणास्यादतोमुख्येनबाध्यते॥२६॥

अनारभ्य श्रूयते यदाहवनीये जुहोति तेन सोऽस्याभीष्टो

तइति ओतिहोमे श्रूयते पदे जुहोति वर्त्मनि जुहोतीति राज सूये श्रूयते वल्मीकवपायामुत्तरस्रुज्जुहोतीति तथान्यत्र श्रूयते गार्हपत्ये पत्नीसंयाजान् जुहोतीति तत्रानारभ्यवादे होमसामान्यमनूद्याहवनीयो विहितः प्रकरणनियमितैः पदादिवाक्यैस्तदनुवद्भिर्विशिष्टहोमा विहिताः। गार्हपत्यवाक्येन होमविशेषमनूद्य गार्हपत्यो विहितस्तत्र पदादिहोमेषु सामान्यशास्त्रेण प्राप्त आहवनीयो विशेषशास्त्रप्राप्तैः पदादिभिः सह विकल्प्यते। कुतः उभयोः प्रत्यक्षवचनयोः क्रत्वर्थत्वेन समानबलत्वात् न चैन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र यथा श्रुत्या लिङ्गं बाध्यते यथा वा चोदकातिदिष्टानां कुशानामुपदिष्टैः शरैर्बाधस्तथा सामान्यस्य विशेषेण बाधोऽस्त्विति चेत् न वैषम्यात् लिङ्गं विलम्बितत्वात् दुर्बलं चोदकश्चानुमेयत्वाद्दुर्बलः। न त्वेवं सामान्यशास्त्रं विलम्ब्यते नाप्यनुमीयते। अतो दौर्बल्याभावाद्विकल्प इति प्राप्ते ब्रूमः। होमसामान्यस्यानुवादकं यच्छास्त्रं तत् सामान्ये मुख्यत्वाद्धोमविशेषानुवादे लाक्षणिकत्वाद्दुर्बलं विशेषशास्त्रं तु मुख्यवृत्त्या विधायकत्वात् प्रबलं न च पदादिशास्त्रमपि होमसामान्यमेवानूद्य पदादिविधायकत्वेन समानबलं स्यादिति शङ्क्यं प्रकरणनियमितत्वेन विशिष्टविधायकस्य सामान्यानुवादायोगात् तस्मात् प्रबलेन विशेषेण सामान्यं बाध्यते॥ नवमाधिकरणमारचयति॥

सामिधेनीसाप्तदश्यं वैमृधादावपूर्वगीः।
संहतिर्वोपकारस्य क्रत्वाद्योस्त्वाज्यभागवत्॥२०

सामिधेन्यश्चोदकाप्ताः साप्तदश्यन्तु वैमृधे।
पुनर्वाक्येन संहाप्यमनारभ्योक्तिचोदितम्॥२१॥

अनारभ्याम्नायते। सप्तदश सामिधेनीरनुब्रूयादिति तथा वैमृधेऽध्वरकल्पायां पशौ चातुर्मास्येषु मित्रविन्दायामाग्रयणेष्ट्यादौ च पुनः पुनः साप्तदश्यं विहितं यद्यपि ता

रभ्याधीतानां प्रकृतिगामित्वं न्याय्यं तथापि श्रुतेन पाञ्च
दश्येनावरुद्धत्वाद् विकृतिष्वेव निविशते तथा सति वैमृ-
धादिषु विकृतिष्वनारभ्य वादप्राप्ताः सप्तदश सामिधेन्यः
प्राकरणिकेन विधिना पुनर्विधीयमाना गृहमेधीयाज्यभा
गवत् क्रमोपकारकत्वेनेति कर्तव्यताकाङ्क्षां पूरयन्त्यश्चो·
दकं लोपयन्त्यो वैमृधादेरपूर्वकर्मतां गमयन्ति साप्तदश्य-
स्त्वनारभ्य वादप्राप्तमनूद्यत इति प्राप्ते ब्रूमः। वैमृधादिषु-
सामिधेन्य आज्यभागवन्न विधीयन्ते किन्तु चोदकप्राप्ता
स्ता अनूद्य साप्तदश्यं विधीयते तच्च साप्तदश्यं वैमृधादि
प्रकरणे प्राम्नातैर्विधिभिः कासुचिदेव विकृतिषु प्राप्तम
नारभ्य वादेन तु सर्वासु विकृतिषु तत्रानारभ्य वादो विल
म्बते प्रथमं विधेयस्य साप्तदश्यस्य सामिधेनी सम्बन्ध-
मवबोध्यान्यथानुपपत्त्या क्रतुप्रवेशं परिकल्प्य प्रकृतौ पा
ञ्चदश्यपराहतत्वेन विकृतिषु सर्वासु निवेशः क्रियत इ
ति विलम्बः प्राकरणिकैर्विधिभिः सामिधेनी सम्बन्ध ए
व बोध्यः क्रतौ तद्विशेषेच प्रवेशोन कल्प्यः प्रत्यक्षप्रकरण-
पाठेनैव तत्सिद्धेः ततः साप्तदश्यस्य वैमृधादिविकृतिविशेष
सम्बन्धे सहसा प्रतिपन्ने सति तद्विरोधात् सम्बन्धो न कल्प
यितुं शक्यः। अनारभ्य वादस्तु वैमृधादिषु प्राप्तस्य नित्यानु
वादोऽस्तु यद्वा प्राकरणिकविधिर्वैमृधादिषु साप्तदश्यप्राप
कः अनारभ्यवादस्तु प्राप्तस्य पाञ्चदश्यस्य बाधकः सर्वथा
पि चतुर्थीकरणवदुपसंहारवचनत्वान्नाज्यभागवदपूर्वक
र्म ॥ दशमाधिकरणमारचयति ॥

स्वाहेत्युक्तिर्द्विहोमे संहारः स्यान्न वाग्रिमः।
पूर्वन्यायान्नतन्मन्त्रे स्वाहाकारविधिस्ततः ॥२२॥
विधित्वेऽपि नियमः स्यान्न व्यत्यासवषट्कृतौ।
होमान्तरे वषट्कारः स्वाहाकारविकल्पनम् ॥२३॥

अनारभ्य श्रूयते वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं

प्रदीयत इति दर्विहोमविशेषे श्रूयते। पृथिव्यै स्वाहान्तरि
क्षाय स्वाहेत्यादि तत्र पूर्वाधिकरणे यथानारभ्य विहितस्य
समाम्नातस्य प्राकरणिकविधिनोपसंहारस्तथोपसंहारे स-
ति होमान्तरेष्वनास्ति स्वाहाकार इति प्राप्ते ब्रूमः। पृथिव्यै
स्वाहेति मन्त्रपाठोऽयं न तत्र स्वाहाकारोऽनारभ्याधीत ब्राह्मणवा
क्येनैव विधीयते। नन्वस्तु यमादित्या अंशुमाप्याययन्ती-
त्यादि याज्यामन्त्रगता आदित्यादिशब्दाः कस्यचिदर्थस्य वि
धायका दृष्टा यथा सिद्धार्थवाची आदित्यशब्दो न विधीय
ते यथा वा क्रियावाचित्वेऽपि वर्त्तमानार्थ आप्याययन्तीति
शब्दो न विधायकस्तथा वैदिकहविर्विषयो दत्तमित्यस्मि
न्नर्थे वर्त्तमानः स्वाहाशब्दो नोच्चारणं विदधाति। तथा सत्यु
पसंहार्योपसंहारकयोरेकविषयत्वशङ्काया अप्यभावा-
न्नास्त्येवात्र पूर्वन्यायः ननु प्रकरणादिना मन्त्रस्य होमे वि
नियुक्तत्वात् स्वाहारविधिरर्थाल्लभ्यत इति चेत् एवमपि
ब्राह्मणवाक्येन पक्षे प्राप्तः स्वाहाकारो नियम्यते अस्मिन् द
र्विहोमे स्वाहाकारेणैवान्नं प्रदीयते ततः पाक्षिको वषट्
कारोऽर्थान्निवर्त्तते। किञ्च पुरस्तात् स्वाहाकारा वा अन्ये
देवा उपरिष्टात् स्वाहाकारा अन्ये इति। अपि च विधित्वेऽपि
ब्राह्मणोक्त वाक्येन स्वाहा पृथिव्या इत्यपि पाठः पक्षे प्रा
प्नोति तत्र पृथिव्यै स्वाहेत्येव पठेदिति नियम्यतेऽर्थाद् व्य-
त्यासो वषट्कारस्य निवर्त्तते तस्मादविधित्वयोरुपसंहा
राभावेन होमान्तरेष्वनारभ्य विहितयोर्वषट्कार स्वाहाका
रयोर्विकल्पः सुस्थितो भवति॥

एकादशाधिकरणमारचयति॥

नातिदेशोऽतिदेशो वा वस्त्यतिग्राह्यपोनेसः।
विकृतौ पुनरुक्तत्वादोषोऽभ्नन्तरवद्भवेत्॥२४॥
प्रकृते विकृतौ साम्यसाम्यापस्यात् पुनर्वचः।
साम्ये च गुणकामानां प्रवृत्तिः प्रकृताविव॥२५॥

एवं श्रूयते यएवं विद्वानग्निं चिनुतइति। उभयमस्मै नं चा-
एनदयज्ञस्य यदति ग्राह्याइति अतिग्राह्य संज्ञकाग्रहायज्ञस्यो
पष्टम्भकत्वादनुष्ठेयाइत्यर्थः। अत्रचीयमानस्याग्नेरतिग्राह्या
णाञ्च विकृतिष्वतिदेशोनास्ति। कुतः पुनरुक्ति वैयर्थ्यप्र-
सङ्गात्। विकृतौ ह्येवं पुनरुच्यते अथातोऽग्निमग्निष्टोमे
नानुयजन्ति तमुक्थ्येन तमतिरात्रे पोऽयादि। अयमर्थः इष्ट
काचितमग्निमनु तस्मिंश्चितेऽग्नौ अग्निष्टोमाद्यनुष्ठानमिति
तत्राग्निष्टोमः प्रकृतिः उक्थ्यादयो विकृतयः। यदि विकृ
तिष्वचोदकश्चितमग्निमतिदेशो तदानीमुक्थ्यादिषु चोदका
देवतत्प्राप्तेः पुनर्विधानमनर्थकं स्यात्। अतिग्राह्याश्च विकृतिषु
पुनर्विधीयन्ते पृष्ठे गृह्णीयादुक्थ्येगृह्णीयात् तस्माद्विधानार्थव
त्वायविकृतावग्न्यतिग्राह्यातिदेशोनास्तीति प्राप्नेब्रूमः। ऐन्द्रवाय
वादिग्रहाणामङ्गानतरामुक्थ्यादिविकृतिषु यथाऽतिदेशोऽभ्यु
पगतस्तथाग्निचयनस्यातिग्राह्याणाञ्चातिदेशः स्यात्। नह्य
खण्डः सन्नत प्रकृतश्चोदकः कानिचिदङ्गान्यतिदिशेतरा-
ण्युपेक्षतइति युक्तम्। अतिदेशप्राप्तानामपि पुनर्वचनं
प्रकृतिसाम्यार्थं यथा प्रकृतावग्न्यतिग्राह्ययोः प्रत्यक्षवि
धिस्तथा विकृतिष्वपीति तत्साम्यं नचसाम्ये प्रयोजनाभावः
गुणकामप्रवृत्तेस्तत्प्रयोजनत्वात्। श्येनचितिंश्चिन्वीत स्व
र्गकामइत्यादिना कामादिगुणफलभूतस्वर्गादिकामा स्त्रु
तास्ते चोपदिष्टमाश्रयमपेक्षन्ते। तस्मादथातोऽग्निमिति वा
क्येन प्रकृतावग्निष्टोमे काम्यचिदुक्थ्यादिविकृतिषु चाग्नि
चयनलक्षण आश्रय उपदिश्यते। अन्यास्तु वाजपेयादिवि
कृतिषूपदिष्टस्याश्रयस्याभावादतिदिष्टस्यचाग्न्याश्रयत्वाद्
गुणकाम्यानां नास्तिप्रवृत्तिस्तस्मात्पुनर्विधानवैयर्थ्याभा-
वादस्त्यतिदेशः॥ द्वादशाधिकरणमारचयति॥
चतुर्द्धिर्वा पुरोडाशेऽवदानं होमतोऽन्तिमः।
चतुर्भेत्रैसहाज्येनत्विन्द्वस्यात्राव्यवादतः॥ ३६॥

दर्शपूर्णमासयोराम्नायते चतुरवत्तं जुहोतीति तत्र किं पु-
रोडाशद्वयगतस्यावदानस्य चतुःसंख्या किंवा तत्र द्विसं-
ख्या चतुष्ट्वं तूपस्तरणाभिघारणार्थाभ्यामाज्यावदानाभ्यां स
ह सम्पाद्यत इति संशयः। तत्र चतुरवत्तस्य द्वितीयाविभ-
क्त्या होमकर्मत्वमुच्यते। न चोपस्तरणाद्यर्थस्याज्यस्य होम
कर्मत्वमस्ति तस्मात् पुरोडाशावदानस्यैव चतुर्वारत्वमि-
ति प्राप्ते ब्रूमः नतावदत्र होमानुवादेन चतुरवत्तत्वं विधीय
ते होमस्याप्राप्तत्वात् नापि विशिष्टविधिर्गौरवप्रसङ्गात् हो
मस्यात्र विधानेन चतुरवत्तत्वमनुवाद्य तच्चाज्यसहितस्यैव
युक्तं द्विर्हविषोऽवद्यतीति विधिना पुरोडाशावदाने द्वित्व
स्यैव प्राप्तत्वात् तस्मात् पुरोडाशे द्विरवदानम्॥

त्रयोदशाधिकरणमारचयति॥

उपांशुयाजे किं तस्यादवदानचतुष्टयम्।
स्याद्वानास्त्युपसंहारान्मानुक्तिर्वाक्यतोऽस्ति तत्।२७॥

दर्शपूर्णमासयोः श्रुतं चतुरवत्तं नोपांशुयाजे। कुतः साम्न
दय्यवदुपसंहारात् यथा साम्नदय्यमनारभ्याधीतं परिगणि
तासु मित्रविन्दादिविकृतिषु पुनः श्रूयमाणत्वात्स्वोपसंहृ-
तं एवमुपस्तरणाभिघारणोपेते हविषि श्रूयमाणं तत्रैवोप
संहर्तव्यं तथाच पुरोडाशसान्नाय्ययोस्तत् पर्यवस्यति उ
पांशुयाजस्य तूपस्तरणादिराहित्यान्नास्ति चतुरवत्तत्वमिति
प्राप्ते ब्रूमः। योऽयमुपसंहरत्वे नोदाहृतो वत्तविधिः सोऽनुवाद
इति पूर्वोक्तं अत उपसंहारो न शङ्कितुं शक्यः मा भूदुपसं-
हारस्तथाप्युपांशुयाजे चतुरवत्तं कथं सिध्यतीति चेत् चतु
रवत्तं जुहोतीति वाक्यादिति ब्रूमः। तस्मादुपांशुयाजे चतुर-
वत्तम्॥ चतुर्दशाधिकरणमारचयति॥

सम्पन्नाः पुरोडाशाभ्यामेवेत्यधिकारिणः।
शेषः स्यात्तत्कृते मैवं कार्त्स्न्यं नित्यत्वबाधनात्॥२८॥
कर्मान्तरविधिर्मैवं मन्त्रभिन्नैवकारतः॥

णिजर्थस्य विधिर्नैव माफल्यात् स्वार्थवर्जनात्॥२९॥
कालस्यास्तु विधिर्मैवं लक्षणायाः प्रसङ्गतः।
ऐन्द्राग्नैकविधिर्मैवं वैषम्याच्चैवकारतः॥३०॥
कालो लाक्षणिकोऽप्यस्तु स्वार्थत्यागेति चेन्मतम्।
स्तुत्या विध्येकवाक्यत्वात् स्वार्थत्वाद्वानुवादता॥३१॥

दर्शपूर्णमासयोरिदमाम्नायते पुरोडाशाभ्यामेवा सोमया
जिनं याजयेत् यावेनावाग्नेयश्चैन्द्राग्नश्चेति। तत्र च षट्प
क्षान् क्रमेणोपन्यासपूर्वकं निरस्य सप्तममवस्थापयति। द
र्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र योऽधिकारी श्रुतस्तस्या
यं शेषः स्यात्। कुतः तच्छ्रुतेः पुरोडाशसाधनकस्य यागस्य
यः कर्त्ताधिकारवाक्ये श्रूयते स एवात्र सोमयाजित्वेन
विशेषितः श्रूयत इत्याद्यः पक्षः। नैष युक्तः कार्त्स्न्यनित्यत्व
योर्बाधप्रसङ्गात् तथाहि पुरोडाशाभ्यामेवेत्येवकारेण स
न्नाय्योपांशुयाजयोर्व्यवच्छेदः। तथा पुरोडाशद्वयस्याग्ने
यश्चैन्द्राग्नश्चेति विशेषितत्वादग्नीषोमीयस्यापि व्यवच्छेदः
ततः कार्त्स्न्यं बाध्येत। तथा सोमयाजिनमेवेत्यन्वयस्तदा
नीं सोमयागादूर्ध्वं दर्शपूर्णमासव्यवच्छेदात् यावज्जी-
वादिवाक्यात् प्रापितनित्यत्वं बाध्येत तस्माद्दर्शपूर्णमासा
भ्यामन्ये आग्नेयैन्द्राग्नकर्मणी विधीयेते इति द्वितीयः प
क्षः। यावेनाविति प्रसिद्धानुवादेन दर्शपूर्णमासावेव प्र
त्यभिज्ञायेते पुरोडाशाभ्यामेवेत्येवकारश्च कर्मान्तरपक्षे व्य
र्थः स्यात्। तस्मात् प्रसिद्धकर्मानुवादेन याजयेदिति णिजर्थ
ऋत्विजो प्रति विधीयते एवकारस्य प्रयोजनं सान्नाय्यादि-
निवृत्तिरिति तृतीयः पक्षः सोऽप्यनुपपन्नः ऋत्विग्गामीफ
लस्य कस्यचिदश्रवणात्। न च विश्वजिन्न्यायेन प्रापयितुं
शक्यं परार्थकर्मणि प्रवृत्तस्यार्थप्राप्तेरेवासम्भवात्। त
स्मात् कालविधिरस्तु सोमयागात् प्राचीने काले पुरोडा
शाभ्यामेव याजयेन्न तु सान्नाय्येन सोऽयं चतुर्थः पक्षः।

एषोऽप्ययुक्तः अ सोमयाजिशब्दस्य काले लक्षणावृत्तिप्रसङ्गात् तस्मादैन्द्राग्नस्यैकस्य पौर्णमास्याममाप्तत्वेन विधिरस्तु आग्नेयस्तु पौर्णमास्याममावास्यायाञ्च नित्यप्राप्तत्वादनूद्यत इति पञ्चमः पक्षः। सोऽप्ययुक्तः सकृत् प्रयुक्तस्यैकस्य लिङ्प्रत्ययस्य विधित्वमनुवादत्वञ्चेति वैषम्यप्रसङ्गात् एवकारस्यात्र त्वयर्थः। तस्मादगत्या लाक्षणिकमभ्युपेत्यापि कालस्य विधिरस्तु। तथाहि असोमयाजिनः सान्नाय्यं नेति तावत् प्रतिप्रसवः श्रूयते। तदिह सन्नयेदिति यदा सोमयागो नास्ति तदापि सन्नयेदेवेत्यर्थः। तथासति सोमयाज्यसोमयाजिनोरुभयोरप्यमावास्यायां सान्नाय्यमैन्द्राग्नपुरोडाशेन सह भिन्नविषयत्वाभावाद् विकल्पितः पुरोडाशः सोमयागात् प्रागेव पश्चात्तु सान्नाय्यमेवेत्यभिमत्य कालो विधीयते। तथा सत्येतच्छास्त्रं सार्थकं नास्ययेति षष्ठः पक्षः। सोऽप्ययुक्तः सान्नाय्येन तु सोमयाजिनमित्यस्य विधेस्तावकत्वे सत्येकवाक्यत्वलाभात् स्वार्थकत्वञ्चैवं सति भविष्यति तस्मादनुवादोऽयमिति सप्तमः पक्षो राद्धान्तः॥ पञ्चदशाधिकरणमारचयति

उपांशुयाजे यत् किञ्चिद् द्रव्यमाज्यमुताग्रिमः।
विशेषानुक्तितो मैवं ध्रौवाज्यस्य विधानतः॥३२॥

उपांशुयाजकर्मतया यजतीत्यत्र द्रव्यविशेषस्यानुक्तत्वादैच्छिकं द्रव्यमिति चेत् मैवम्। आज्यस्योक्तत्वात् नाव श्रुतम् अग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्तीति हि श्रुतं तन्न चैवमप्यनियतं किंचिदाज्यमिति शङ्क्यम् ध्रौवस्य विहितत्वात् सर्वस्मै वा एतद्यज्ञाय गृह्यते यत् ध्रुवायामाज्यमिति विहिते विध्यश्रवणेऽपि ध्रौवाज्यस्य सम्प्रयोजनत्वाय विपरिणामः कर्तव्यः॥

षोडशाधिकरणमारचयति॥

तत्राद्यः कोऽपि देवः स्यात्तान्त्रिको वाग्निमो भवेत्।

अविशेषात् प्रकरणात्तान्त्रिकोऽत्र नियम्यते ॥ ३३
तत्रोपांशुयाजे या काचिद्देवता स्यात् विष्णुरुपांशु यष्ट
व्य इत्यादेरर्थवादत्वेनाविधायकत्वात् अन्यस्य च देवता
विधेरदर्शनात् यागेन देवतामात्रस्यैव कल्पनाच्च । नैवम्
उपांशुयाजस्य दर्शपूर्णमासप्रकरणपठितत्वाद्दर्शपूर्ण-
मासतन्त्रमध्यपठित एव कश्चिद्देवः प्रत्यासत्त्योपांशुयाजे
नियम्यते ॥ सप्तदशाधिकरणमारचयति ॥

कोऽपि देवस्तान्त्रिकेषु नियतो वा न वाऽपि किम् ।
प्रजापतिः कृताग्निः स्यादग्नीषोमावुताथवा ॥ ३४ ॥
विष्णुर्वेद्यापि सुत्रस्य विकल्प्यं देवतात्रयम् ।
कोऽप्यत्र नियमान्नैवमुपांशुत्वादियन्त्रणात् ॥ ३५ ॥
प्रजापतिरुपांशुत्वात्तूष्णीम्भावप्रयोगतः ।
अग्निर्मुख्यत्वतो मैवं तत्प्राप्त्यादेरपाठतः ॥ ३६
अग्नीषोमौ तदुक्तेर्नो तत्रकालविधानतः ।
विष्णुर्याज्यादितस्तत्र प्राजापत्योक्तिबाधनात् ॥ ३७
याज्यात्रैविध्यतः प्राप्ता विकल्प्यन्तेऽत्र देवताः ।
विधिशेषार्थवादेऽपि तत्र प्राप्त मनूद्यते ॥ ३८ ॥

तान्त्रिकदेवेषु नियामकाभावाद्यः कोऽपीति चेत् न वक्ष्य
माणानामुपांशुत्वादीनां नियामकत्वात् यत्किञ्चित् प्राजा
पत्यं यज्ञे क्रियते उपांश्वेव तत्क्रियते इति वचनादुपांशु
त्वधर्मसामान्येन प्रजापतिं मनसा ध्यायेदिति विधेस्तू-
ष्णीम्भावस्यैव प्रजापतिधर्मत्वात् प्रथमं यागदेवत्वेन मु
ख्यत्वादग्निर्देवतेति चेत् । न । उपांशुयाजक्रमेऽग्निविषय
याज्याद्यपाठात् नावप्रूनामित्यादि पूर्वोदाहृतवाक्यादग्नीषो
मौ देवतेति चेत् । न । तस्य वाक्यस्य पौर्णमासीकालविधाय
कत्वात् कस्याञ्चिच्छाखायामुपांशुयाजक्रमे वैष्णवया-
ज्यापुरोऽनुवाक्ययोः पाठाद्विष्णुर्देवतेति चेत् । तथा सति
शाखान्तरप्राप्तयोः प्राजापत्ययोर्बाधः प्रसज्येत तस्मात्त्रा-

नाशात्वादुपहिताभ्यां विष्णुप्रजापत्यग्नीषोमविषयया-
ज्यापुरोऽनुवाक्याभ्यां याज्ञात्रिस्रो देवता विकल्प्यन्ते।अत
एवोपांशुयाजविधिशेषः श्रूयतेऽप्येतदेव प्राप्तं देवतात्रय
मनूद्यते विष्णुरुपांशु यष्टव्यो जामित्वाय प्रजापतिरुपां
शु यष्टव्यो जामित्वायाग्नीषोमावुपांशु यष्टव्यावजामि-
त्वायेति।तस्माद्देवताविकल्पो राद्धान्तः॥

अष्टादशाधिकरणमारचयति॥

दर्शो हि वोतनस्य कालो दर्श एवास्य यद्वा।
द्विपुरोडाशसान्निध्याद्वयोर्दर्शोऽग्रिमोऽग्रतः।४९॥
विष्णुयाजोक्तितो युक्तो मध्यमः पूर्णिमाविधेः।
स एव कालो याज्याया उत्कर्षः पूर्णिमादिने॥५०॥

जामिवा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपां
शुयाजमन्तरा यजत्यजामित्वायेति पुरोडाशयोर्मध्ये स
यागो विहितः।पुरोडाशौ तु पौर्णमास्यामाग्नेयाग्नीषोमीयौ
अमावास्यायामाग्नेयैन्द्राग्नौ ततो द्विःपुरोडाशसन्निधेः
समानत्वाद्दर्शपूर्णिमायोस्तूभयत्रोपांशुयाजस्य काल इ
त्याद्यः पक्षः।दर्शं प्रक्रम्य याज्याकाण्डे आग्नेययाज्याया अ
धस्ताद्वैष्णवयाज्यायाः पाठात् प्रकरणसन्निधितः प्रब
लत्वाद्दर्श एव काल इति मध्यमः पक्षः।तावब्रूतामग्नीषो
मावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति पौर्णमास्या
स्तत्कालत्वेन विधानाद्वाचनिकस्य विधेः प्रबलत्वात्पौ
र्णमास्येव कालस्तथा च वैष्णवयाज्या प्रकरणादुत्कृष्यताम्॥

एकोनविंशाधिकरणमारचयति॥

पुरोडाशैकयुक्तायां पौर्णमास्यामयं न हि।
स्याद्वा नास्त्यन्तरे त्वन्ते लेस्य कालेऽस्ति मङ्गवत्।५१।

सोमात्प्रागग्नीषोमीयपुरोडाशरहिता केवलाग्नेयपुरो
डाशयुक्ता पौर्णमासी भवति स सोमेनेष्ट्वाग्नीषोमीयो भव-
तीति वाक्येनाग्नीषोमीययोः सोमयागोत्तरकालत्वावगमात्

तस्मादुपांशुयाजो नास्ति। कुतः उपांशुयाजमन्तरा यजतीति पुरोडाशद्वयान्तरालवर्तित्वेन तस्य गुणत्वेन विधानादिति प्राप्ते ब्रूमः। किं पुरोडाशावन्तरालकालस्य विशेषणभूतौ उतोपलक्षणभूतौ नाद्यः अन्तरालकालवत् तद्विशेषणयोः पुरोडाशयोरुपांशुयाजगुणत्वप्रसङ्गात्। न चैतद्युक्तम्। उपांशुयाजवत्तयोरपि स्वातन्त्र्येणैव लक्ष्यफलान्वयात् द्वितीये तु शङ्खन्याये नोपलक्षकस्याग्नीषोमीयपुरोडाशस्याभावेऽप्युपलक्ष्ये काले यागोऽस्ति यथा शङ्खध्वनिवेलायां राजसेवार्थं प्रतिदिनमागन्तव्यमित्युक्ते कस्मिंश्चिद्दिने तं शङ्खं धमतः पुरुषस्याभावे नोपलक्षकस्य ध्वनेरभावेऽप्युपलक्षिते तस्मिन् काले सेवकः समागच्छति तथात्रापि द्रष्टव्यं यदि तत्र कालोपलक्षकं मन्यदेवव्यापारभूतं सूर्यगमनादिकं सम्भाव्यते तर्ह्यत्रापि सम्भवत्येवाग्नेयपुरोडाश उपलक्षकः तस्मादेकपुरोडाशायामपि पौर्णमास्यामस्त्युपांशुयाजः॥

इति माधवीये जैमिनीयन्यायमालाविस्तरे दशमाध्यायस्याष्टमः पादः समाप्तः॥

---

## अथ एकादशोऽध्यायः॥

बाधाबाधविचारेण प्रयाजे निश्चिते सति।
प्रयोगस्य विचारोऽथ तन्त्ररूपो विचार्यते॥

अनेन दशमैकादशयोरध्याययोः पूर्वोत्तरभाव उपपादितः॥

एकादशाध्यायस्याद्यपादे प्रथमाधिकरणमारचयति॥

षड्यागानां फलं स्वर्गः प्रत्येकं तन्त्रतायवा।
आद्यः पृथक्फलार्थित्वात्तत्संघस्य फलोक्तितः॥१॥

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति श्रुतं फलमाग्नेयादिभिः षड्भिर्यागैः प्रत्येकमभिसम्बध्यते। कुतः पृथग्गुन्

पन्नतया परस्परनिरपेक्षाणां पृथगेव फलाकाङ्क्षित्वादि
ति चेन्न। तत्समूहवाचिना दर्शपूर्णमासशब्देन व्यवहृत्य
सङ्घस्यैव फलसम्बन्धात्॥ तस्मात्स्वर्गस्तेषां फलं तन्त्रेण
तन्त्वेते विस्तार्य्यन्ते बहूनामुपकारो येन सकृत प्रवर्तितेन त
दिदं तन्त्रम्। तद्यथा बहूनां ब्राह्मणानां मध्ये कृतः प्रदीपस्ते
षामुपकरोति। नत्वनुलेपनभोजनादिवत् प्रतिपुरुषमावृ
त्तिलक्षणमावापमपेक्षते। एवं स्वर्गस्तन्त्रेण फलम्

द्वितीयाधिकरणमारचयति॥

कार्य्यभेदेन वाङ्गानां सौर्य्यचित्रादिवद्भिदा
करणैक्यात्तदेकत्वं द्वारभेदो बहुत्वतः॥ २॥

यानि प्रयाजाज्यभागाद्यङ्गानि तेषां सर्वेषां करणं प्रत्युप-
कारभेदः स्यात्। कुतः कार्य्यभेददर्शनात्। यथा सौर्य्यं चरुं
निर्वपेद् ब्रह्मवर्चसकामश्चित्रया यजेत पशुकाम इत्या
दिषु परस्परनैरपेक्ष्येण विहितानां सौर्य्यादीनां ब्रह्मवर्चसा
दिकार्य्यभेदस्तथा प्रयाजाज्यभागादीनां परस्परनिरपेक्षा
णां करणे प्रकारो भिद्यते। नचात्र पूर्वन्यायेन सङ्घोपकार
गमकं किञ्चिदस्तीति प्राप्ते ब्रूमः। करणाकाङ्क्षानुसारेण।
ह्यङ्गोपकारः कल्प्यः। करणञ्च स्वयमेकं सत्स्वप्रात्युद्दे
धनलक्षणमेकमेवोपकारमङ्गेभ्यो
नमपेक्षते। अङ्गबहुत्वन्तु द्वारकार्य्यभेदेनोपपद्यते। यथा·
तण्डुलकाष्ठस्थाल्यादीनां कारकाणां द्वारभेद एवौदननि-
ष्पादनलक्षणप्रधानकार्य्यमेकमेव तद्वदत्र द्वारभेदेऽप्युप
कारएकएव॥ तृतीयाधिकरणमारचयति॥

उपकारः समस्तेन कैश्चिद्वा निखिलैः कृतः॥
आकाङ्क्षापूरणादाद्यः फलाधिकायमध्यमः॥ ३॥
कपोतवद्यौगपद्यत्यागहेतोरभावतः।
सम्भूय करणाकाङ्क्षापूरयत्युपकारतः॥ ४॥

सोऽयं करणप्रत्येक उपकारः पूर्वत्र निर्णीतः। समस्तेना

ङ्गे न सिध्यति। करणस्याङ्गाकाङ्क्षायास्तावता पूरितत्वाद्य
था ग्रामगतैः सर्वैः कर्तव्यैः करदानमेकराजकुलसमागतः क
रोति। कराकाङ्क्षा च तावता निवर्तते। तथात्रापि द्रष्टव्यम्। य
द्येतदङ्गमनुष्ठेयमिति विशेषनियामकं न स्यात् तर्हि विक
ल्पोऽ— स्त्वित्याद्यः पक्षः। यथा यावन्ति काम्यकर्माणि सौ
र्यचित्रादीन्यनुतिष्ठति तावत् फलमाप्नोति तथाङ्गभूय-
स्त्वेन फलभूयस्त्वसम्भवादिच्छया कानिचिदङ्गान्यनुष्ठे
यानि। तेष्वतिशयवानेककरणोपकरणे जायत इति मध्यमः
पक्षः। यथा जिघत्सया खलबीजभक्षणाय कपोतपङ्क्तिर्यु-
गपत् पतति तथा करणाकाङ्क्षां पूरयितुं समर्थानि सर्वा-
ण्यङ्गान्येकप्रयोगवचनपरिगृहीततया युगपत् प्राप्तानि
तेषां केषाञ्चित् परित्यागे हेतुर्नास्ति। तस्मात् सर्वाण्यङ्गा
नि सम्भूयैकस्योपकारजनने करणाकाङ्क्षां पूरयन्तीति रा
द्धान्तः। वार्तिककारस्तु पूर्वाधिकरणस्यैवैपर्थ्यं मन्यमानोऽ
स्मिन्नेवाधिकारेणान्तर्भावयामास ॥

चतुर्थाधिकरणमारचयति ॥

काम्यकर्मप्रयोगः किं सकृदेवासकृच्च वा ।
फलसिद्धेरादिमोऽन्यो भूयः स्वेच्छानुसारतः ॥ ५ ॥

चित्रादिकाम्यकर्म सकृदेव प्रयोक्तव्यम्। तावतैव पश्वा-
दिफलसिद्धेः। यथा प्रयाजाद्यङ्गं सकृदेवानुष्ठीयते तद्वदि
ति प्राप्ते ब्रूमः। विषमो दृष्टान्तः। करणस्याङ्गेषु सकृदेवाका
ङ्क्षा। इह तु पुरुषः स्वर्गपश्वादीन् भूयो भूयः कामयते। अ
तस्तदनुसारेण प्रयोगावृत्तिः ॥

पञ्चमाधिकरणमारचयति ॥

अवघातः सकृत्को वा सकृत्तस्माद्विधिसिद्धितः ।
दृष्टतण्डुलनिष्पत्तिस्तदन्तोऽभ्यस्यतामयम् ॥ ६ ॥

ब्रीहीनवहन्तीत्यत्र सकृन्मुसलपातमात्रेण विधिप्रयुक्त
स्यापूर्वस्य सिद्धेर्नास्त्यत्रावृत्तिरिति चेत् न। तण्डुलः नि-

ष्यत्नेऽदृष्टप्रयोजनत्वेन तत्सामर्थ्येन तस्याभ्यासस्यान्तस्यापि कल्पनीयत्वात्। एवं तण्डुलपेषणाद्यपि द्रष्टव्यम्॥

षष्ठाधिकरणमारचयति॥

सर्वौषधावघातः किमावृत्त्यैः सकृदेव वा।
आवर्त्यः पूर्ववन्मैवं दृष्टार्थस्यात्रवर्जनात्॥७॥

अग्निप्रकरणे श्रूयते। औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वावहन्ति। अथैतदुपदधातीति। अत्रादृष्टमात्रस्य प्रयोजनत्वात् सकृदेवावघातः॥

सप्तमाधिकरणमारचयति॥

अङ्गाभ्यासोनवाभूम्नाभ्यासोऽनाङ्गे पृथक् फलम्।
अङ्गावृत्त्यैव भूमातः प्रयोगेऽङ्गं सकृद्भवेत्॥ ६॥

एकस्मिन्यागे प्रयाजाद्यङ्ग फलभूमार्थिनाभ्यस्यम्॥ कारीर्यादेः काम्यस्य कर्मणोऽभ्यासेन फलभूयस्त्वदर्शनादिति चेन् न अङ्गोपकृतप्रधानस्य यत् फलं ततोऽतिरिक्तस्य कस्यचिद्भावात्। यदि फलभूमानमर्थयेत्तदासाङ्गं प्रधानमावर्तनीयम्। नत्वङ्गमात्रावृत्त्यातत् सिध्यति न नूपकारभूयस्त्वमङ्गावृत्तिलक्षणम् फलभूयस्त्वे पर्यवस्यति। यथा सस्यादिषु कर्षणाद्यावृत्तिकृतो भूयानुपकारः फलं वर्धयति तद्वदिति चेत्। न। तत्रतु दृष्टत्वादिहत्वदृष्ट उपकारः शास्त्रादेव बोध्यः नच शास्त्रमुपकारभूयस्त्वायाङ्गावृत्तिं क्वचित् ब्रूते। तस्मादेकस्मिन् प्रयोगे सकृदेव प्रयाजाद्यङ्गानुष्ठानम्॥ अष्टमाधिकरणमारचयति॥

कपिञ्जलेषु त्रित्वाद्यासंख्या त्रित्वमेव वा।
आद्या बहुत्वसाम्येन त्रित्वं नैव कृतत्वतः॥ ८॥

अश्वमेधे वसन्ताय कपिञ्जलानालभत इति त्रित्वचतुष्ट्वादिसंख्यानां सर्वासां बहुत्वसाम्यादिच्छया काचिद्बहुसंख्या स्वीकार्येति चेत्। न त्रित्वे नैव शास्त्रार्थस्य कृतत्वात्। योऽपि चतुष्ट्वादिसंख्यामुपादत्ते तेन तदन्तर्भूतं त्रित्वं वर्ज्

यितुं शक्यते। अतोऽवश्यम्भावित्वेन प्रथमभावित्वेन लाघवेन च त्रित्वोपादाने शास्त्रार्थसिद्धौ ततः शक्यम्। त्रित्वोपादानेन त्वनन्तर्भूतं चतुष्ट्वादिकं वर्जयितुं न शक्यते। अधिकपशुहिंसायां प्रत्यवायात्। तस्मात् त्रित्वमेवोपादेयम् ॥

नवमाधिकरणमारचयति॥

उत्तरास्तिस्र एव स्युर्यावत्यः स्युर्वात्र पूर्ववत्।
तिस्र एव हविः कान्तो पूर्वयोर्विधितोऽन्तिमः॥९॥

सान्नाय्यदोहं प्रकृत्य श्रूयते। वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयतीति। तत्र तिसृभ्य उत्तरा गावो यजमानस्य यावत्यः सन्ति। तासां मध्ये कपिञ्जलन्यायेनोत्तरास्तिस्र एव गावो दोहनीया इति प्राप्ते ब्रूमः। नास्यैतां रात्रिं पयसाग्निहोत्रं जुहुयात् कुमाराश्च न पयो लभेरन्निति विद्यमानपयसो हविष्ट्वं विधीयते। न चात्र कुमाराणां पयसो निषेधः तथा सति दृष्टार्थत्वपरित्यागेनादृष्टार्थत्वं कल्प्येत। कुमाराश्चेत्येवच्च शब्दस्यापि शब्दार्थवाची प्रयुज्यमानस्तदा व्यर्थः स्यात्। किञ्च बहुदुग्धीन्द्राय देवेभ्यो हविरित्यस्मिन्नपि मन्त्रे हविषां बाहुल्यं प्रतीयते। तेन प्राप्तं सर्वोत्तरा गोदोहनमनूद्यापूर्वमनारम्भणमात्रं विधीयते। तस्माद्विधेय कपिञ्जलवैषम्याद्धविर्बाहुल्यार्थं सर्वोत्तरा दोहनीयाः॥ अथ दशमाधिकरणमारचयति॥

प्रत्यङ्गं कार्य्यमेवाङ्गानि तन्त्रेणोताङ्गिनो यतः।
एकैकस्योपकार्य्यत्वं तस्मात् प्रत्यङ्गमनुष्ठितः॥१०॥
विधानवदनुष्ठानं सकृदेवोपकारकम्।
तद्देशकालकर्तॄणामेकत्वात्तन्त्रकारिवत्॥११॥

पौर्णमास्यां त्रीण्याग्नेयादीन्यङ्गानि प्रयाजाज्यभागैरुपकार्याणि तेष्वेकैकस्याङ्गिन उपकारापेक्षितत्वात् प्रतिप्रधानमङ्गानि पृथगनुष्ठेयानीति प्राप्ते ब्रूमः। यथा समिधो यजतीत्यादिविधानं सकृदेव प्रवृत्तं तथाग्नेयादित्रयोद्देशेन पृथक्

प्रवर्त्तते। तथानुष्ठानमपि सकृदेव प्रवर्त्तते। प्रवृत्तं सत् त्रयाणामुपकाराकाङ्क्षां पूरयति। यथा बहूनां पुरतो नृत्यन्नर्त्तकः सर्वेषामुत्सवं युगपन्निर्वर्त्तयति तद्वत् तस्मादाग्नेयादिषु देशकालकर्त्तृणामेकत्वादङ्गानां तन्त्रेणानुष्ठानम्॥

अथ एकादशाधिकरणमारचयति॥

कृष्णग्रीवद्वये तन्त्रं पृथग्वा देवतैक्यतः।
तन्त्रं सौम्यव्यवायेन कालभेदात् पृथग्भवेत्॥१२॥

सौकाम्यपशुकाण्डे श्रूयते। आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमान इति अयमर्थः। ममैव पौरोहित्यमस्तु नान्यस्येत्येवं स्पर्धोपेतो यथोक्तवर्णोपेतं पशुत्रयमालभेतेति। तत्राद्यन्तयोः कृष्णग्रीवयोः प्रत्याग्नेयदेवतैक्यात् तन्त्रेणानुष्ठानम्। इति चेन्न। सौम्यपशुना व्यवधाने सति कालैक्यासम्भवेन तन्त्रासम्भवात् तस्माद्भेदः॥

इति माधवीये जैमिनीयन्यायमालाविस्तरे एकादशाध्यायस्य प्रथमः पादः समाप्तः॥

---

द्वितीयपादस्य प्रथमाधिकरणमारचयति॥

आग्नेयादिप्रधानस्य देशकाले च कर्त्तरि।
भेदः स्यादथवा तन्त्रमङ्गत्वाद्द्रव्यदेववत्॥१॥
उत्पत्तिविधिशेषत्वाद्भेदः स्यादेकशब्दतः।
विधेः प्रयोगशेषत्वादभेदेन तु तन्त्रता॥२॥

दर्शपूर्णमासयोर्देशकालकर्त्तारो विहिताः। समे दर्शपूर्णमासाभ्यां यजेत पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजेत। दर्शपूर्णमासयोश्चत्वार ऋत्विज इति। एते देशकालकर्त्तारोऽङ्गत्वात् द्रव्यदेवतावत् उत्पत्तिविधिशेषाः सन्तः प्रधानेष्वाग्नेयादिषु प्रतिप्रधानं भिद्यन्त इति प्राप्ते ब्रूमः। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येकेन शब्देनाग्नेयादीनां पृथगुत्पन्नानामपि परस्परसहितानामेव फल

साधनत्वेन विधानादेकः प्रयोगो गम्यते। तमेकप्रयोगमपाद्
कमेकं दर्शपूर्णमासशब्दमुपजीव्य देशादिविधानाद्देशादयो
ऽपि प्रयोगशेषा एव न तूत्पत्तिशेषाः। तस्मादेकस्मिन् प्रयोगे
देशादीनां तन्त्रेण सम्बन्धः॥

द्वितीयाधिकरणमारचयति॥

अङ्गेष्वेकेऽपि देशाद्याः किंवा नैवं तदादिवत्।
अनन्वयात्तकेऽपीमेवं प्रयोगेण परिग्रहात्॥ ३॥

प्रयाजाद्यङ्गेषु येकेऽपि देशकालकर्तारः। प्रतीतिप्रच्छ
याकर्तव्याः। कुतः। अनन्वयात्। यथा प्रधानान्वितयोर्द्रव्य
देवतयोरङ्गेष्वन्वयो नास्ति तथा देशादीनामपीति प्राप्ते ब्रूमः
। प्रयोगशेषत्वं देशादीनां न त्वाग्नेयादिविधिशेषत्वमित्युक्त
म्। प्रयोगेण च प्रधानवदङ्गान्यपि गृह्यन्ते। तस्माद्य एव दे
शादय प्रधानानां त एवाङ्गानामपि॥

तृतीयाधिकरणमारचयति॥

सङ्गभेदे तन्त्रभङ्गः नवा कर्मैकतोऽग्रिमः।
न मुख्यकालभेदोक्ता प्रयोगस्य पृथक्कृतः॥ ४॥

इष्टौ विद्यमानानां षण्णां यागानां द्वावेवान्तरसङ्गौ दर्शश्च-
पूर्णमासश्च। चातुर्मास्येषु चत्वारः सङ्गाः वैश्वदेव वरुणप्र-
घाससाकमेधशुनासीरीयाः। एतादृशे विषये सङ्गानां नानेक
त्वे कर्मैकत्वात् प्रयोगैक्ये सत्यङ्गानां तन्त्रेणानुष्ठानं युक्तम्।
न च पौर्णमास्यमावास्ययोः कालभेदेनाङ्गभेदः शङ्क्यः। पशु
वदभेदोपपत्तेः। वपया प्रातःसवने प्रचरन्ति पुरोडाशेन-
माध्यन्दिनेऽङ्गैस्तृतीयसवने इति वपापुरोडाशहृदयाद्य
ङ्गप्रचाराणां कालभेदेऽपि पश्वङ्गानां प्रयाजानां यथा नास्या-
वृत्तिस्तद्वदत्रापीति प्राप्ते ब्रूमः। नात्राङ्गतन्त्रं युक्तम्। कुतः
। दर्शपूर्णमासकर्मणः सकलफलसाधनत्वे तत्तत्स्वरूपतः एक
त्वेऽपि दर्शप्रयोगात् पूर्णमासप्रयोगस्य पृथक्कृतत्वात्। न च पृ
थक्कृतत्वं वाचनिकात् कालभेदादवगम्यते। पशुदृष्टान्तस्तु वि

षमः। नहि मुख्यस्य पशुयागस्य भेदोऽभिहितोऽस्ति। वपादी
नां तु प्रयाजाद्यपेक्षया मुख्यत्वेऽप्यस्ति महद्वैषम्यम्। प्रया
जादिभ्यो वपादयो मुख्यास्तेभ्यो वपाद्यवयवेभ्योऽवयवी
पशुर्मुख्यः। अत्रापि प्रयाजादिभ्यः आग्नेयादयस्त्रयो मु
ख्यास्तेभ्योऽपि तेषां सङ्घो दर्शो मुख्यस्तस्य च दर्शस्य कालभे
दो विधीयते। अमावास्यायाममावास्यया यजेतेति। तत्र द
र्शयागस्यानीयस्य पशुयागस्य कालभेदो विधीयते चेत्।
भवेत्तदा साम्यं न त्वेवं विधीयते। किन्तु वपादिप्रचार
स्यैव कालभेदो विधीयते। नहि प्रचारस्याङ्गभूतस्य मुख्य
यागत्वमस्ति येन प्रयोगभेदोऽत्राशङ्क्येत। तस्मात् पशुवै
षम्येण मुख्यस्यैव दर्शस्य पूर्णमासयागस्य च कालभेदो
ऽस्य प्रयोगभेदे सति प्रयोगशेषाणां प्रयाजादीनामावृत्ति
रिति। एवं वैश्वदेवादिषु द्रष्टव्यम्॥

चतुर्थोऽधिकरणमारचयति॥

अङ्गान्यध्वरकल्पायां प्रातःकालादिवृत्तिषु।
त्रिषु सङ्घेषु तन्त्रेण स्युर्भेदेनाथवाग्रिमः॥ ५॥
उपस्थशेषनिर्वापात्तद्द्वाराङ्गापकर्षणात्।
प्रातर्निर्वापवैषम्यान्मुख्यकालाद्यभिन्नता॥ ६॥

काम्येष्टिष्वध्वरकल्पानाम् काचिदिष्टिः। तत्र प्रातःकाले
त्रयाणां यागानामाग्नावैष्णव सारस्वत बार्हस्पत्यानां सङ्घः
पठितः। मध्याह्नपराह्णयोरपि तथैव पठितः। अष्टाकपाले
कादशकपालद्वादशकपालैरग्ना वैष्णवो विशेषितः इत
रत् समानम्। तत्र त्रिषु सङ्घेषु प्रयाजाद्यङ्गानां तन्त्रम्।
कुतः। पुरा वाचः प्रवदितोर्निर्वपेदिति सङ्घस्य यागस्याङ्गे
षु निर्वापस्य रात्रौ सुप्तजानां प्रबोधपूर्वकव्यापारात् प्राची
न उषःकालेऽपकर्षे सति निर्वापवदङ्गान्तराणामपकर्षस्य
प्रतिभानादिति प्राप्ते ब्रूमः। आग्नावैष्णवं प्रातरष्टाकपालं
निर्वपेदिति सामान्येन विहितोऽयः प्रातःकालीनो निर्वापः

सएव सन्निहितत्वात् पुरावाचइति विशिष्यते। तस्मादुत्तरसङ्ग्निर्वापोऽपि मुख्यत्वलाभाय तत्तत्कालयोः कर्त्तव्यस्तद्वत् प्रयाजादीनामपि भेदेनानुष्ठानम्॥

पञ्चमाधिकरणमारचयति

प्राजापत्यवसानां किं भेदस्तन्त्रमुतोऽग्रिमः।
पशुभेदाद्देवपाककालैक्यात्तु तन्त्रतोऽन्तिमः॥७॥

वाजपेये सप्तदशसु प्रजापतिदेवताकेषु पशुषु तद्भेदानुसारेण वसाहोमो भिद्यत इति चेत्। न। प्रजापतिरेक एव सप्तदशानां पशूनां देवता। तथा पाकोऽपि सहैव क्रियते प्रदानस्यापि पाकउपलक्षणं प्रदानेऽपि साहित्यमस्ति। कालश्चैको याज्यार्द्धर्चान्तस्य तत्कालत्वेन चोदकातिदेशाक्लृप्ते च सहहोमस्तस्मात् तन्त्रम्॥

षष्ठाधिकरणमारचयति॥

ऐकादशिनगे तन्त्रं वसाहोमेऽथ भिन्नता।
तन्त्रं शक्यत्वतो भेदः प्रधानार्थे च भेदतः॥८॥

एकादशिनेष्वाग्नेयः सारस्वतसौम्यादिपशुषु वसाहोमस्य सहकर्त्तुं शक्यत्वात् तन्त्रमिति प्राप्ते ब्रूमः। देवताभेदेन प्रधानभेदात्। तत्र याज्यार्द्धर्चान्तकालानां भिन्नत्वेनानुष्ठाने यौगपद्यासम्भवाद्भेदः॥

सप्तमाधिकरणमारचयति॥

यूपैकादशिनीयूपाहुतेर्भेदोऽथ तन्त्रतः॥
समीपभेदाद्भेदोऽन्त्यः सामीप्यं दृष्टिगं यतः॥९॥

यूपैकादशिन्यां चोदकप्राप्ता यूपाहुतिः प्रतियूपं भिद्यते। कुतः। यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोतीति तद्विधानात्। सामीप्यानां च भेदादिति प्राप्ते ब्रूमः। न तावद्वस्तुतः सामीप्यं सम्भवति यूपदाहप्रसङ्गात्। अतो यावता व्यवधानेन यूपा दृष्टिगोचरा भवन्ति तावतो देशस्य समीपत्वमभ्युपेयम्। देशैक्यसम्भवादाहुतेस्तत्र तन्त्रता॥

अष्टमाधिकरणमारचयति ॥

किमश्वावभृथे मुख्यमात्रं साङ्गमुताग्रिमः।
मुख्यत्वेनान्वयान्मैवं प्रयोगेण सदन्वयात् ॥ ८॥

इदं श्रूयते। अश्वावभृथेन चरन्तीति। तत्र वारुण एककपालो ऽवभृथशब्दवाच्यत्वान्मुख्यं कर्म तेन मुख्येनापामन्वयः श्रूयते। अतो द्रव्यस्यैवैतावदपां मुख्यमन्त्याङ्गत्वात् प्रधानमात्रस्यैवाप्स्वनुष्ठानम्। आघाराज्यभागादीन्याहवनीये ऽनुष्ठेयानीति प्राप्ते ब्रूमः। स्यादप्येवम्। यद्यवभृथ इत्येतावतैव श्रूयेत। इह त्वश्वावभृथेन चरन्तीति श्रवणादवभृथप्रयोगेणापामन्वयात् साङ्गं प्रधानमप्सु कर्तव्यम्॥

नवमाधिकरणमारचयति ॥

मारुत्याः सार्धमष्टाभिरङ्गैस्तन्त्रमितो ऽथवा।
प्रयोगैकत्वतस्तन्त्रं भेदो देशस्य भेदतः ॥ ९॥

वरुणप्रघासेष्वाग्नेयादीनि नव हवींषि विहितानि तेषु मारुतीमामिक्षां प्रतिप्रस्थाता दक्षिणे विहारे ऽनुतिष्ठति। इतराणि त्वष्टावध्वर्युरुत्तरे विहारे ऽनुतिष्ठति। तेषामष्टानां प्रयोगैक्यात् तन्त्रेणाङ्गान्युभयवादिसम्मतानि। तथा तान्येव मारुत्या अपीत्यत्रापि तन्त्रं प्राप्तम्। कुतः। वरुणप्रघासान्तःपातित्वेन प्रयोगैक्यात्। नन्वत्र विहारभेद आम्नातः। पृथगग्नी प्रणयतः पृथग्वेदी कुरुत इति सो ऽयं पृथगनुष्ठानाभावे व्यर्थः स्यात्। मैवम्। हविरासादनमात्रे तद्भेदोपयोगात्। अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति मारुतमेव प्रतिप्रस्थाता दक्षिणस्मिन्निति तद्विधानात्। तस्मात् तन्त्रमिति प्राप्ते ब्रूमः। देशभेदात् प्रयोगभेदे सत्यङ्गानुष्ठानमपि भिद्यते। न च तद्भेदस्य हविरासादनमात्रार्थता युक्ता। तदासादनस्य दृष्टहोमार्थता परित्यागेनादृष्टार्थत्वकल्पनाप्रसङ्गात्। न च प्रयोगभेदे नैवासादनभेदस्यापि सिद्धेर्वचनमनर्थकं स्यादिति वाच्यम्। अव्यवस्थया प्रयोगप्राप्तौ त

द्यवस्यार्थत्वात्। तस्माद्भेदेनाङ्गानुष्ठानम्॥
दशमाधिकरणमारचयति॥
कर्तृभेदो न वा तन्त्रभेदः स्यादङ्गभेदवत्।
पञ्चर्त्विवचनान्मैवं द्वयोरुक्त्या व्यवस्थितिः॥१०॥
तत्र पूर्वोक्ते विषये प्रयोगभेदादाधाराद्यङ्गभेदइव होतृब्रह्मादीनां कर्तृणामपि भेदइति चेत् मैवम्। वाचनिकपञ्चसंख्याविरोधात्। अध्वर्युप्रतिप्रस्थातृहोतृब्रह्माग्नीध्राः पञ्चर्त्विजश्चातुर्मास्येषु विहिताः। चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजइति। यद्याग्नेयाद्यष्टके मारुत्यां च होत्रादिभेदः स्यात् तदा पञ्चसंख्या बाध्येत। ननु पञ्चसंख्यासिद्ध्यर्थमाग्नेयाद्यष्टके प्रतिप्रस्थाता प्राप्नुयात्। मारुत्यां चाध्वर्युः प्राप्तइति चेत् सत्यम्। प्राप्तावेव तौ उभावुभयत्र। व्यवस्था तु वचनाद्भविष्यति। ननु वचनं पूर्वोदाहृतम्। तस्मान्नास्ति कर्तृभेदः॥ एकादशाधिकरणमारचयति॥
तन्त्रैव पत्नीसंयाजादौ तन्त्रं भिन्नता ऽथवा।
तन्त्रमाग्नेयके तौ मैवं कर्तृभेदानिवारणात्॥१२॥
तत्रैवाग्नेयाद्यष्टके मारुत्यां च गार्हपत्ये होतव्येषु पत्नीसंयाजादिषु तन्त्रमुक्तम्। कुतः। गार्हपत्यस्यैकत्वात् न चाहवनीयवद्दक्षिणविहारे गार्हपत्यः पृथगस्ति। तस्मात् तन्त्रमिति प्राप्ते ब्रूमः। न तावदत्र पूर्वोक्तः कर्तृभेदो निवारयितुं शक्यते। तथा सत्यध्वर्युणा कृताः पत्नीसंयाजाः प्रतिप्रस्थातृकर्तृकायां मारुत्यां कथमुपकुर्युः। तस्मादध्वर्युः प्रतिप्रस्थाता च गार्हपत्ये पृथक् पत्नीसंयाजान् जुहुयात्॥ द्वादशाधिकरणमारचयति॥
पर्यग्निकरणे त्याग आलम्भो ब्रह्मसामनि।
क्रमे शेषनिषेधस्य कर्मान्तरविधिर्भवेत्॥१३॥
किंवोत्कर्षो वसिष्ठस्य ब्रह्मारण्योक्तिवदादिम।
अदृष्टवाक्यभेदाप्तेर्द्रव्याभावेन चान्तिमः॥१४॥
वाजपेये सप्तदश प्राजापत्यान् पशून् सञ्ज्ञिनुत इति प्रकृ

त्य श्रूयते। तान् पर्य्यग्निकृतानुत्सृजतीति ब्रह्मसाम्न्याल-
भत इति। सप्तदशसु पशुषु पर्य्यग्निकरणेऽनुष्ठिते सत्युत्त
रकालभावी कर्मशेष उत्सर्गशब्देन निषिध्यते। अश्वमे-
धे पर्य्यग्निकृतानारण्यानुत्सृजतीत्यत्र कर्मशेषनिषेधस्य
प्रतिपन्नत्वादत्रापि तथात्वेन सप्तदश पशवः पर्य्यग्निक
रणान्ताः समाप्याः। आलभतिनाच ब्रह्मसामकाले कर्मा-
न्तरमिति प्राप्ते ब्रूमः। कर्मान्तरविधौ सप्तदशपशुजन्यादृ
ष्टाद्भिन्नं किञ्चिददृष्टं कल्प्येत। वाक्यभेदश्च प्राप्नुयात्। कि
ञ्च ब्रह्मसाम्न्यालभत इत्यत्र द्रव्यदेवतयोरश्रवणान्नकर्मा
न्तरविधिः सम्भवति। तस्मात्पर्य्यग्निकरणानन्तरमेव कार्य्य
स्य सप्तदशपशूनामालम्भादिशेषस्य ब्रह्मसामकाले उत्क
र्षो विधीयते। तथा सत्यर्थात् प्राप्तः पर्य्यग्निकरणानन्तरभावि
कर्मव्यापारोपरम उत्सर्गशब्देनानूद्यते ॥

त्रयोदशाधिकरणमारचयति॥

उक्षोत्सर्गः किमुत्कर्षस्त्यागो वाद्योऽत्र पूर्ववत्।
अन्वहं त्रितयोरुक्तमादृ पञ्चनयोर्विधौ ॥९५॥
वाक्यभेदाद्विशिष्टानामन्येषां कर्मणां विधिः।
तस्मादारण्यवत्तेषु त्याग उत्सर्ग इष्यताम् ॥९६॥

अस्त्यहीनेषु पञ्चशारदीयनामकः कश्चित् पञ्चाहवि-
शेषः स च पञ्चसु वर्षेष्वनुष्ठेयः। तत्र प्रथमे वर्षे विशाखा
नक्षत्रयुक्तायाममावास्यायां सप्तदशस्त्रीपशवः सप्तद-
शोक्षाणश्च विहितास्तेषु सर्वेषु पर्य्यग्निकृतेषु प्रोक्षितेषु च
सत्सु स्त्रीपशूनामालम्भः पुंपशूनामुत्सर्गश्चाम्नायते पुन-
र्द्वितीये तृतीये चतुर्थे च वत्सरे तथैवानुष्ठानमाम्नायपञ्चा
दाम्नायते। त्रीस्त्रीनेकैकस्मिन् अहन्यालभेरन् पञ्चो
त्तमेऽहनीति तत्र वत्सरचतुष्टयगतासु चतसृष्वमावास्या
सु सोऽयं पशूनामुत्सर्गस्तत्र कर्मशेषत्यागो न भवति किन्तू
त्कर्षः। त्रीस्त्रीनिति वाक्येनालम्भस्याभिधानात्। यथापूर्वं

प्राजापत्यानामालम्भोत्कर्षस्तथात्रापि युज्यत इति प्राप्ते ब्रूमः
। श्रौतस्तावन्नैकस्मिन् अहनि आलभेरन्नित्यत्र पर्य्यग्निक
रणानन्तरभाविनं प्राप्तमालम्भमनूद्यैकाहत्वत्रित्वगुणयो
र्विधौ वाक्यं भिद्येत। तथापञ्चानमेऽहनि इत्यत्रोक्तमाहत्व
पञ्चत्वयोर्विधौ वाक्यभेदस्तस्मात्तद्गुणद्वयविशिष्टानाम-
न्येषां कर्मणां विधिरभ्युपेयस्तथा सत्यारण्यपशुन्यायेन स
प्रदशोक्षाणः पर्य्यग्निकरणप्रोक्षणाभ्यां समापनीयाः॥

चतुर्दशाधिकरणमारचयति॥

दशपेये चाभिषेचनीयेन तन्त्रमिताथवा ।
क्रयसाहित्यतस्तन्त्रं कालभेदेन भिन्नता॥२७॥

राजसूये दशपेयाभिषेचनीयसंज्ञकौ द्वौ सोमयागौ तयो
रङ्गानुष्ठानं तन्त्रेण कार्य्यम्। कुतः क्रयसाहित्यात् सहसो
मौ क्रीणाति अभिषेचनीय दशपेययोरिति श्रूयते। तथा स
त्यभिषेचनीयस्य दशपेयस्य च सोमे क्रेतव्ये सति क्रयात्
पूर्वभाविनां दशपेयाङ्गानामपकर्षात्तन्त्रं स्यादिति प्राप्ते-
ब्रूमः। भिन्नकालीनयोरभिषेचनीय दशपेययोरङ्गानां भे
दो युक्तः संसृपाख्याभ्यो दशभ्यः इष्टिभ्य ऊर्ध्वमपराह्णे दश
पेयस्योपक्रमस्ताभ्यः प्राचीनेऽत्यन्तव्यवहिते कालेऽभिषे-
चनीयः। न च क्रयसाहित्यमस्ति सद्योदीक्षयन्ति सद्यः सो
मं क्रीणन्तीति दशपेये क्रयस्य सद्यःकालत्वविधानात् स
ह सोमाविति वचनेन क्रयार्थोपसंवादे साहित्यं विवक्षि
तम्। तस्मादुभयोरङ्गानां भेदः॥

पञ्चदशाधिकरणमारचयति॥

निष्कासावभृथे विप्रकर्षोऽथप्रतिपादनम्।
उतार्थकर्म पशुवदाद्योऽवभृथशब्दतः॥२८॥
कर्मान्तरं तदापि स्यात्प्रतिपत्तिः प्रयाजवत्।
प्राधान्यायार्थकर्मस्यात्तत्त्वावभृथकर्मकम्॥२९॥

चातुर्मास्ययागेषु वरुणप्रघासेषु वारुणीमामिक्षां प्रक्र-

त्येदमाम्नायते। वारुण्या निष्कासेन तुषैश्चावभृथं यन्तीति।तत्रायं प्रयोगप्रकारः।वरुणप्रघासेषु नवहवींषि तेष्वष्टमं हविर्वारुण्यामिक्षा नवमं हविःकाय एककपालः वारुण्यामामिक्षायां यवपिष्टनिर्मितं मेषमवदधाति तत आमिक्षासंयुक्तं मेषं सर्वमवदाय हुत्वा ततः एककपालेन प्रचर्य्य भाण्डलिप्तेन वारुण्यामिक्षायाः निष्कासेन यवतुषैश्चावभृथमनुतिष्ठतीति। तत्र संशयः। किं वारुण्यामिक्षाया एकमंशं यवमयमेषसहितं पूर्वं प्रदाय पश्चादेककपाल प्रचारादूर्ध्वं निष्कासरूपांशान्तरेण तुषैश्च प्रचरितव्यमित्येवं प्रचारस्य विप्रकर्षः। उत कर्मान्तरम्। तत्रापि किं प्रतिपत्तिकर्म आहोस्विदर्थकर्मेति। तत्र विप्रकर्ष इति तावत् प्राप्ततः। पशौ तथा दृष्टत्वात्। प्रातःसवने वपया प्रचर्य्य तृतीयसवने हृदयाद्यङ्गैः प्रचार इति सवनीयपशौ यथा प्रचारविप्रकर्षस्तद्वदत्रापीत्याद्यः पक्षः। तथा सत्यवभृथशब्दवैयर्थ्यं स्यादतः कर्मान्तरमिति पक्षान्तरम्। तदाप्यामिक्षाहविःशेषस्य निष्कासस्यास्मिन् कर्मणि हविष्ट्वायोगात् प्रयाजशेषन्यायेन तत्प्रतिपत्तिः स्यात्। यथा प्रयाजशेषेण हवींष्यभिघारयतीत्यत्र शेषसंस्कारत्वमभिघारणं तथात्रापि निष्कासः संस्क्रियत इति प्राप्ते ब्रूमः। तस्मिन् पक्षे निष्कासस्य संस्कार्य्यद्रव्यत्वेन प्राधान्यान्निष्कासमिति विभक्तिव्यत्ययः स्यादतोऽवभृथस्य प्राधान्यायार्थकर्मत्वमेष्टव्यम्। यदि चातुर्मास्येषु नास्त्यवभृथस्तदा तद्धर्मातिदेशाय तन्नामनिर्देशोक्तिरन्यदीयद्रव्यशेषस्यापि कर्मान्तरे विनियोगो वाचनिकस्तस्मादर्थकर्म॥ षोडशाधिकरणमारचयति॥

प्रायणीयस्य निष्कासे योनिर्वापोऽर्थकर्म वा।
निष्कासप्रतिपत्तिर्वोदनीयस्य संस्कृतिः॥२०॥
उतार्थः पूर्ववन्नैवं मुख्यस्य प्रकृतत्वतः।
मध्योऽस्तु नापयोक्त्यसंस्कारस्य गुरुत्वतः॥२१॥

ज्योतिष्टोमे श्रूयते। प्रायणीयस्य निष्कास उदयनीयमभिनिर्वपतीति अत्र पूर्वन्यायेन निष्कासद्रव्यकम् उदयनीयस्य प्रकृतत्वाद् भिन्नप्रकरणाम्नातावभृथधर्मातिदेशवदुदयनीयधर्मातिदेशासम्भवाच्चापूर्वकर्मत्वम्। तर्हि निष्कासप्रतिपत्तिरिति मध्यमः पक्षोऽस्तु। सोऽपि न सम्भवति। उपयुक्तसंस्काराद् उपयोक्ष्यमाणसंस्कारस्य गरीयस्त्वात्। तस्मादुदयनीयस्य संस्कारः॥

इति माधवीये जैमिनीयन्यायमालाविस्तरे एकादशाध्यायस्य द्वितीयः पादः समाप्तः॥

---

तृतीयपादस्य प्रथमाधिकरणमारचयति॥

वेद्यादि मुख्यकाले स्यात् स्वकाले वेतराङ्गवत्।
मुख्यकालेन पूर्वेद्युरित्याद्युक्तेः स्वकालतः॥१॥

वेदिर्वेद इध्मा बर्हिरित्यादेः सम्पादनरूपमङ्गानुष्ठानं प्रधानस्यैव काले कर्तव्यम्। प्रयाजाद्यङ्गेषु मुख्येन सह देशकालकर्त्रैक्यस्य निर्णीतत्वादिति चेत्। न। कालादिभेदस्य वाचनिकत्वात्। पूर्वेद्युरमावास्यायां वेदिं करोतीत्यादिः कालभेदः। अप्स्ववभृथेन चरन्तीत्यादि देशभेदः। अग्नी सौत्रामण्यां च दक्षिणाभेदात् कर्तृभेदः। वडवा दक्षिणेति सौत्रामण्यां श्रुतम्। तस्माद् वेद्यादौ स्वस्वकालादयो द्रष्टव्याः॥ द्वितीयाधिकरणमारचयति॥

प्रतिकर्म पृथक् कार्यमाधानं यदि वा सकृत्।
अन्याङ्गवत् पृथङ् नैवं स्वकालत्वसमत्वतः॥२॥

वसन्ते ब्राह्मणोऽग्निमादधीतेति विहितमाधानं प्रयाजाद्यङ्गवत् प्रतिकर्म पृथक् कार्यमिति चेत्। न। आधानस्य स्वातन्त्र्येण वसन्तादिकाले विहितत्वात् तत्कर्मकालेषु पृथगनुष्ठानायोगात् स्वकालेऽनुष्ठितस्य सर्वकर्मणि सम्बन्धः समानः। न च प्रकरणेन विशेषो नियन्तुं शक्यः आधान

स्यानारम्भाधीनत्वात्। आहवनीये जुहोतीत्यादिवाक्येन नै
ष्टिकपाशुकसौमिकदार्विकहोमेषु उपयोगः साधारणः
प्रतिपाद्यते। तस्मात्तन्त्रेणानुष्ठानम्। यद्यप्याधानं नेष्ट्या
दिकर्मणां साक्षादङ्गं तथापि पृथक् फलाभावादाहवनी
यादिद्वारा कर्मोपकारत्वाच्चाङ्गत्वमभ्युपेत्यैवं चिन्ता॥

तृतीयाधिकरणमारचयति॥

अग्नीषोमीयपश्वादिषु यूपो भिन्नोऽथ तन्त्रता।
उपदेशातिदेशाभ्यां भिन्नो नो कालभेदतः॥३॥

ज्योतिष्टोमे पशवोऽग्नीषोमीयसवनीयानुबन्ध्यास्त्रयो
विहितास्तेषु यूपभेदो युक्तः। कुतः अग्नीषोमीये प्रत्यक्षव
चनेन तदुपदेशादितरयोश्चोदकाख्यमतिदेशादिति प्राप्ते
ब्रूमः। न तावदिदमग्नीषोमीयपशोः काले यूपस्योत्पत्तिः
। किन्तु ततः प्रागेव यूपोत्पत्तिकालः। दीक्षासु यूपं छिन-
त्तीति क्रीते राजनीति तत्कालविधानात्। ततआधानव-
त्सर्वार्थत्वं सम्भवति। यथा स्वकाले सम्पन्नमाधानं तत्त
द्वाक्यशेषैस्तेषु तेषु कर्मसु तथा स्वकाले छेदनादिना नि
ष्पन्नो यूपः प्रत्यक्षचोदकाभ्यां तत्र विनियोज्यः। तस्मा
त्तन्त्रेण यूपः सम्पाद्यः। ॥

चतुर्थाधिकरणमारचयति॥

संस्कारास्तक्षणाद्याः किं भिन्नास्तन्त्रेण वाऽग्रिमः।
पशुकालत्वतो मैवं यूपत्वापादका यतः॥४॥

तक्षणपर्यूहणादयो यूपसंस्काराः पशुकालीनत्वात् नि
योजनादिवत् त्रिषु पशुषु भेदेन कर्तव्या इति चेत्। मैवम्
। छेदनतक्षणादीनामपि यूपकालीनत्वात्। न खलु यूपो
नाम कश्चिल्लोकप्रसिद्धः पदार्थोऽस्ति येन तस्य छेदनमात्रे
ण तत्तद्विधिः कृतार्थः स्यात्। किन्तर्हि छेदनतक्षणादिना यू
पसंज्ञामाप्नुवन्नेव विधीयते। यथा समस्तैः छेदनतक्षणा
दिसंस्कारैर्यूपत्वमापद्यते ते सर्वे छेदनकाल एवानुष्ठेयाः

तस्मात् त्रिष्वपि पशुषु यूपच्छेदनवत्तक्षणपर्यूहणादय-
स्तन्त्रेणानुष्ठेयाः॥ पञ्चमाधिकरणमारचयति॥

स्वरुर्भिन्नोऽथवैकः स्यात् स्वकालत्वतो भिदा।
प्राथम्यमेकशकले तन्त्रं स्यादविशेषतः॥५॥

शकलः स्वरुरित्युच्यते। स च भिन्नेषु पशुषु भिन्नः स्या-
त्। कुतः। अस्वकालत्वात्। नहि यूपस्येव स्वरोः कश्चित् प्रा-
तिस्विकः कालः श्रूयते। ततः स्वरुणा स्वधितिना च पशुम-
नुक्ते तत्तत्कालीनत्वात्स्वरुभेद इति प्राप्तेऽभिधीय-
ते। यः प्रथमः आपतेत् स स्वरुः कार्य्य इति श्रुतं प्राथम्यमे-
कस्मिन् शकले युक्तम्। स च शकलो यूपकालीनः पशुवि-
शेषसम्बन्धे हेतुमलभमानो यूपवत्तन्त्रेण सर्वेषु पशुषु
उपकरिष्यति॥ षष्ठाधिकरणमारचयति॥

अहर्गणे विषाणायास्त्यागोऽह्नोः किं विकल्पते।
किं वा नियम्यतेऽन्त्येऽह्नि स्यादाद्यो बाधसाम्यतः॥६॥
कण्डूयनं न हस्तेन श्रुतमर्थात्तु तद्भवेत्।
श्रुतबाधाद्वरन्त्यस्य बाधोऽतोऽन्त्ये नियम्यताम्॥७॥

कृष्णाविषाणया कण्डूयते। नीतासु दक्षिणासु चात्वाले कृ-
ष्णाविषाणं प्रास्यतीति ज्योतिष्टोमे श्रुतम्। प्रासनमहर्गणयो-
र्द्विरात्रादौ चोदकप्राप्तम्। तत्र प्रथमे चरमे वाह्नीत्येवं वि-
कल्पते। कुतः। उभयत्र बाधसाम्यात्। यदि प्रथमेऽहनि प्रा-
स्येत् तदानीमुत्तरेष्वहःसु चोदकप्राप्तं दक्षिणानयनात् प्राची-
नं विषाणया कण्डूयनं बाध्येत। चरमेऽह्नि तत्प्रासने पूर्वे-
ष्वहःसु दक्षिणानयनादूर्ध्वं हस्तेन कण्डूयनं चोदकप्राप्तं
बाध्येत। तस्मात् समबलत्वेन विकल्प इति प्राप्ते ब्रूमः। न
हि हस्तेन कण्डूयनं किञ्चिच्छ्रुतं किन्तु विषाणायास्त्यक्ता-
यां अर्थात् प्राप्यते कामं तस्य बाधोऽस्तु। श्रुतं विषाणयाक-
ण्डूयनमबाधितुं चरमेऽह्नि प्रासनं नियम्यते॥

सप्तमाधिकरणमारचयति॥

नानाबीजेषु यागेषु वाग्विसर्गोऽस्य पूर्ववत्।
शङ्कितेन द्वैधो न स्याद्विधिनैतदुत्तरम्॥८॥

राजसूये नानाबीजयुक्ता यागाः श्रुताः। अग्नये गृहपतये-
पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणां सोमाय वन-
स्पतये श्यामाकं चरुमित्यादिना प्रकृतौ प्रणीताप्रणयन
काले नियमिताया वाचो हविष्कृदाह्वानकाले विसर्गः श्रुतः
। स चात्र चोदकप्राप्तः। तत्र प्रथमे चरमे वा हविषि हविष्कृ
दाह्वानकाले वाग्विसर्गो विकल्पित इति पूर्वः पक्षः। अत्रे
यं पूर्वपक्षिणोऽभ्यधिका शङ्का हस्तेन कण्डूयनं न विहितं
वाग्विसर्गस्तु विहित इति तत्रेदमुत्तरम्। विहितस्य वाङ्-
नियमस्यावधित्वेनायं हविष्कृदाह्वानकालीनो वाग्विस
र्गोऽनूद्यते रागप्राप्तत्वान्नासौ विधीयत इति। तस्मात् प्रा-
सनाद्विसर्गोऽपि चरमकाले नियम्यते॥

अष्टमाधिकरणमारचयति॥

पशुकाले पुरोडाशकाले वा वाग्विसर्जनम्।
तन्त्रित्वादादिमोऽन्त्यः स्याद्वाग्यमात्कर्तृसंस्कृतिः॥९॥

यद्यपि पशौ हविष्कृदाह्वानं नास्ति तथापि कृत्वाचिन्तयम्
। तत्र पशौ हविष्कृदाह्वानकाले वाग्विसर्जनीया। कुतः। प
शोस्तन्त्रित्वात्। पशुपुरोडाशस्य प्रासङ्गिकत्वेन पशावनुष्ठि
तैरेवाङ्गैरुपकारसिद्धेरिति प्राप्ते ब्रूमः। वाग्यमोऽनादृष्टार्थः
। किन्तु तत्कर्तृसंस्कारार्थः। तथा सति पुरोडाशे तदभावे स
त्यसंस्कृतकर्त्रा तदनुष्ठानं प्रसज्येत। तस्मान्नियतां वाचं
पुरोडाशस्य हविष्कृदाह्वानकाले विसृजेत्॥

नवमाधिकरणमारचयति॥

किमग्निमोकः सर्वान्ते मुख्यान्ते वाग्निमोचनः।
योगे सर्वार्थता मैवं मुख्यार्थोऽसौ तदन्तिमः॥१०॥

अग्निचयने योगविमोकौ अग्नेः श्रुतौ। अग्निं युनज्मी
ति मन्त्रहोमो योगः इमं स्तनमिति मन्त्रहोमो विमोकः।

सच साङ्गप्रधानविषयः सर्वप्रयोगान्ते कर्त्तव्यः। योगस्य सर्वार्थत्वेन मध्ये तद्विमोकासम्भवादिति प्राप्तेब्रूमः। पत्त्वमिथुनक्ति पाङ्क्तो यज्ञो यावानेष यज्ञस्तमाप्नोति इत्यनेन मोचने यज्ञप्राप्तिवचनेन योगस्य प्रधानार्थत्वावगमात् प्रधानकर्मणोऽन्ते विमोकं कुर्य्यात्॥

नवमाधिकरणं वार्त्तिकमतेनारचयति॥

व्यत्यस्ते नानुभौ पत्नीयुक्तेत्वविशेषतः।
सर्वार्थत्वद्गुणोभातिसर्वान्तेऽतोविमोचनम॥११॥

प्रधानान्ते विमोक इति यो भाष्ये सिद्धान्तः सएवात्र पूर्वपक्षः। अग्निष्टुत्तमभि शवसाद्यते नेति जुहोत्यग्निमेव तद्युनक्तीति एतद्योगस्याम्नातत्वात्। पत्त्वमिथुनक्तीति गुणविधिः। तत्र न तावद्युक्तो प्रधानगामी योग इत्यस्यार्थस्य गमको विशेषोऽस्ति। गुणविधिशेषेऽपि यज्ञशब्देन प्रधानमाचष्टे। किन्तुसाङ्गम्। तस्माद्योगस्य सर्वार्थत्वाद्विमोकोऽपि सर्वान्ते कर्त्तव्यः॥ दशमाधिकरणमारचयति॥

उपसत्तुकालसुब्रह्मण्याग्रणे भिद्यतेनवा।
प्रधानभेदाद्भेदः स्यात्कालभेदान्नभिद्यते॥१२॥

अहर्गणेषूपसत्कालीनं सुब्रह्मण्याह्वानं प्रधानभेदाद्भिद्यत इति चेत्। न। पूर्वकालीनतया यूपन्यायेन तन्त्रत्वात्।

एकादशाधिकरणमारचयति॥

सुत्याकालीनमाह्वानंतन्त्रंस्याद्भिद्यतेऽथवा।
यूपाहुतिवत्तन्त्रंसुत्याकालतया भिदा॥१३॥

अहर्गणेषु प्रथमसुत्यासन्निधौ कृतमपि सुब्रह्मण्याह्वानं सर्वेषामहः सूपकरोति। यथा यूपैकादशिन्या दृष्टिगोचरे देशे क्रियमाणाज्याहुतिः सन्यप्यर्थादेक यूपसन्निधौ सर्वेषामुपकारस्तद्वदिति प्राप्ते ब्रूमः। अन्यसुत्याकालीने नाह्वानेनात्र नास्त्युपकारः। कालविशेषस्यापि तत्प्रयोजकत्वात्। अन्यथा ग्रहादीनामपि तन्त्रत्वापत्तेः तस्मादाह्वा

तं भिद्यते॥ द्वादशाधिकरणमारचयति॥
देशपात्रर्त्विजोऽन्यस्मिन्प्रयोगेऽन्यद्वैकल्पिकाः॥
देशपात्रर्त्विजो ऽस्मिन्प्रयोगोऽन्यद्वैकल्पिकाः॥१४॥
भुक्तार्थपर्णवत्तेऽन्येवासोवत्तेस्युरैच्छिकाः।

मुक्तार्थपर्णवत्तेऽन्येवासोवत्तेस्युरैच्छिकाः॥१४॥
भुक्तार्थपर्णवन्नेऽन्येवासोवन्नेस्युरैच्छिकाः॥१४॥ अध्वर्युप्रमुखा समेयजेनेत्युक्तोदेशः। जुह्वादीनि पात्राणि। अध्वर्युप्रमुखा ऋत्विजः। तेचैकस्मिन्प्रयोगेउपयुक्ता निरिष्टकत्वान्न प्रयोगान्तरमर्हन्ति। इष्टान्निर्गता निरिष्टाः कुत्सिताः। निरिष्टानि चिह्निकाः पुनः प्रयोगा नर्होइत्यर्थः। यथा भोजनउपयुक्तं कदली पलाशादिपर्णप्रक्षाल्यापि न पुनस्तच्छिष्टाः स्वीकुर्वन्ति। तथात्राप्यन्ये देशादयः प्रयोगान्तरे सम्पाद्याइतिप्राप्ते। ब्रूमः। यथा वस्त्रं प्रक्षाल्यापि पूर्वदिने प्रावरणायोपयुक्तमपि दिनान्तरे निरिष्टकं नभवति शिष्टास्तद्वासो दिनान्तरे स्वीकुर्वन्ति तद्वदत्रापि द्रष्टव्यम्। इदंनिरिष्टकमिदंनेत्यत्र शिष्टाचारएव प्रमाणम्। शिष्टाश्च देशादिनियमेन नत्यजन्ति तस्माद्वैच्छिकाः॥

त्रयोदशाधिकरणमारचयति॥
माभूदन्यत्वनियमः पात्रेतत्त्वंकिमैच्छिकम्।
नियतंवाग्निसोदेशवन्मैवंप्रतिपत्तितः॥१५॥
देशपात्रर्त्विजां साधारण्येनान्यत्वनियमे निवारिते सति पुनः पात्रान्तरेषु नियमानियमसद्भाववश्चिन्त्यते। प्रथमप्रयोगे यान्युपयुक्तानि पात्राणि तान्येव प्रयोगान्तरेष्विति नियमो नास्त्युतास्तीति संशयः। यथादेशे कर्तृषु चतएवेति नियमो नास्ति ऐच्छिकत्वोक्तत्वात्तथा पात्रेष्वपीति नियमो नास्त्युतास्तीति संशयः। यथादेशे कर्तृषु चतएवेति नियमो नास्ति ऐच्छिकत्वोक्तत्वात्तथा पात्रेष्वपीति चेत्। मैवम्। आमरणं पात्राणां धारणीयत्वात्। आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति प्रतिपत्तिविधानेनामरणं धारणमेवावगम्यते। ननु पात्रैरिति तृतीयया अर्थगुणभावावगमाद्दर्शकर्मेदंनतु प्रतिपत्तिः। तथासति पात्रान्तरैरपि दाहसिद्धेर्न

धारणनियम इति चेत्। नैवम्। दक्षिणेपाणौ जुहूमासादयतीति द्वितीयया प्रतिपाद्यत्वावधारणात्। पूर्वेषामेव धारणम्। तस्मात् सर्वेषु प्रयोगेषु पात्राणां तन्त्रम्॥

चतुर्दशाधिकरणमारचयति॥

किंपौर्णमासमारभ्य यद्वाधानमिति संधृतिः।
प्रकृत्यर्थतयाद्यः स्यान्मरणानियमात्परः॥१६॥

अनारभ्याधीतानां पात्राणां प्रकृतिगामितया पौर्णमासीमारभ्य धारणमिति प्राप्ते ब्रूमः। आधानकाले पवमानेष्टिषु चोदकप्राप्तत्वात्पात्राणामाधानमारभ्य धारयितव्यानि। अन्यथाधानपौर्णमास्योर्मध्ये यजमानस्य कदाचिन्मरणे पात्राभावेन दाहाभावप्रसङ्गात्। तस्मादाधानमारभ्य धारणमित्यपरः पक्षोऽभ्युपगन्तव्यः॥

पञ्चदशाधिकरणमारचयति॥

प्राजापत्यप्रचारः किमार्भवे शस्त्रिसोमतः।
ऊर्ध्वं वा विकृतौ चोत परस्तात्सर्वसोमतः॥१७॥
आर्भवे चोदकाद्ग्रयासंनिध्यात्तदनन्तरः।
श्रुतिबाधस्तदा तस्मात्तृतीयो विकृतिस्त्वतः॥१८॥
पशवो न हि सोमस्य विकारा अविशेषतः।
उक्तत्वात्सर्वसोमानामुपरिष्टात्प्रचर्यते॥१९॥

वाजपेये सप्तदशप्राजापत्यप्रचारस्य काले चतुर्धा संशयः। तत्र तावदयं प्रयोगक्रमः तृतीयसवने प्रथममार्भवः पवमानः। ततो वैश्वदेवग्रहपर्यन्ताः शस्त्रवन्तः सोमाः। ततः शस्त्रिषु अवशिष्टेषु सोमग्रहेषु प्रचीर्णेष्वग्निष्टोमसाम्न ऊर्ध्वमुक्थ्यादयः सोमविकाराः। इत्येवं स्थिते प्राजापत्यपशूनामार्भवकाले प्रचारः कुतः। प्रकृतौ तस्य प्रचारकालत्वेन चोदकप्राप्तत्वादित्याद्यः पक्षः। उपरिष्टात् सोमानां प्राजापत्यैश्चरतीति वचने सोमग्रहप्रचारादूर्ध्वे काले विधीयते। यदि प्रातःसवनमाध्यन्दिनसवनसोमेभ्यः ऊर्ध्वत्व

प्राग्भेवकालस्यास्तीति योज्येत तदा चोदकेनैव तत्कालप्राप्ते र्वेचनमनर्थकं स्यात्। अतस्तृतीयसवन सोमानामुपरीति वक्तव्यम्। यदि तत्र सर्वसोमानामुपरीति विवक्ष्येत तदा चोदकप्राप्तः कालो विप्रकृष्यते। ततः प्रत्यासत्तये शस्त्रिणा दैष्वैन्द्रवग्रहानानां सोमानामुपरीति द्वितीयः पक्षः। उपरिष्टात् सोमानामित्यविशेषप्रकृताश्रुतिः कतिपयसोमाध्ये न विवक्षायां बाध्येत तस्मात्तृतीयसवनं तदूहितानां च सोमानामुपरिष्टादग्निष्टोमे यज्ञायज्ञीयसाम्नि संस्थिते सति स प्रचारः कार्यः। तस्य विकृति कालत्वात्। प्राजापत्यपशूनां च विकृतिरूपत्वादिति तृतीयः पक्षः। सोमविकाराणामेवायं कालः। पशवस्तु न सोमविकाराः। तस्मादविशेष वचनानुसारेण प्राकृतानां च वैकृतानां च सर्वेषां सोमानामुपरिष्टात् प्राजापत्यपशुप्रचार इति राद्धान्तः॥

षोडशाधिकरणमारचयति॥

सवनीयपुरोडाशे देवोत्कर्षो न विद्यते।
अस्ति वा पश्ववत्त्वात् नान्यथाभावतोऽक्लिप्तः॥२०॥

ज्योतिष्टोमे सवनीयपशुस्तत्त्वी। सवनीयपुरोडाशः प्रसङ्गी। तस्मिन् पुरोडाशे देवता आम्नाताः। धानाः इन्द्राय हरिवते धानाः पूषण्वते करम्भमित्यादिना। तत्र देवता वाचिनां हरिवदिन्द्रपूषण्वदित्यादिपदानामुत्कर्षो विषयः। तस्यैवं सम्भावना। सवनीयपशोस्तावदनुयाजा उत्कृष्यन्ते। अग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीत्यनुयाजानामाग्निमारुतशस्त्रादधस्तनं स्वकालं निवार्योर्ध्वकालस्य विहितत्वादुत्कृष्टेष्वनुयाजेषु तदुत्तरकालीनः सूक्तवाकोऽप्युत्कृष्यते। तस्मिंश्च सूक्तवाके देवतावाचीनि पदानि प्रयोक्तव्यानि। प्रसङ्गिनः पुरोडाशस्य पृथक् सूक्तवाको नास्ति। ततः पशुसम्बन्धिसूक्तवाकोत्कर्षेण पुरोडाशसम्बन्धिदेवतावाचिपदोत्कर्षः सम्भावितः स चोत्कर्षो नास्तीति तावत् प्राप्त

मु॰। कुतः। तासां देवतानां पश्वनङ्गत्वात्। मैवम्। सूक्तवाक
मन्तरेण पृथगुच्चारितानां देवतानां देवतापदानामन्वया
भावात्। सूक्तवाके भृज्जन्निन्द्राय हरिवते धाना अयं यज
मान इत्यस्यान्वयः। तस्मादुत्कर्षोऽस्तीति सिद्धान्तः॥
इति माधवीये जैमिनीयन्यायमालाविस्तरे एका
दशाध्यायस्य तृतीयः पादः समाप्तः॥

---

चतुर्थे पादे प्रथमाधिकरणमारचयति॥
सोमापौष्णादिके तन्त्रमङ्गानामुत भिन्नता।
तन्त्रं फलैक्यतो मैवं दक्षिणाकर्तृभेदतः॥१॥
राजसूये श्रूयते। सोमापौष्ण एकादशकपाल ऐन्द्रापौष्ण
श्चरुः पौष्णश्चरुः श्यामो दक्षिणेति। आग्नावैष्णव एकाद-
शकपाल ऐन्द्रावैष्णवश्चरुर्वैष्णवस्त्रिकपालो वामनो दक्षि
णेति। तत्र द्वयोस्त्रिकयोस्तन्त्रेणाङ्गानुष्ठानम्। कुतः। कृत्स्न
स्य राजसूयस्य फलैकत्वेन तदेकदेशयोरपि फलैकत्वात्।
न च दर्शपूर्णमासयोरिवात्र कालभेदोऽस्ति येनावापः शङ्क्ये
तेति प्राप्ते ब्रूमः। श्यामवामनयोर्दक्षिणयोर्भेदेन ताभ्यामान
तानां कर्तॄणां भेदादङ्गानि भिद्यन्ते॥
द्वितीयाधिकरणमारचयति॥
राजसूये प्रक्रमस्य कर्तारो नियता न किम्।
नियता वा दक्षिणानां भेदादनियता अमी॥२॥
अनेकसमुदायात्मराजसूयाय ते वृताः।
आदौ ते न नियम्यन्ते विशेषे दक्षिणाभिदा॥३॥
राजसूयस्य ये कर्तारस्त एवा समाप्तेर्नियम्यन्ते। दक्षिणा
दि भेदेन कर्तृभेदस्य पूर्वमुक्तत्वात् तथा च यथा दक्षिणया
ये परिक्रीतास्ते तदीयकर्मानुतिष्ठन्तु। इतरस्मिन् कर्मणि-
दक्षिणान्तरेण ते वाऽन्ये वा परिक्रीयन्तामिति प्राप्ते ब्रूमः।
अनेन राजसूयसंज्ञेन कर्मसमुदायेन मा याजयेत्येवमादौ

यजमानेन वृतत्वात् आसमाप्तेस्त एव कर्त्तारः। ईदृशमेव वरणं न्याय्यम्। समुदायस्यैकफलत्वात्। प्रतिकर्म पृथग्वरणे गौरवात् कदाचिद्दर्शितव्यानामलाभे विघ्नप्रसङ्गाच्च। कर्त्रैक्येऽपि कर्तृत्वधर्मविशेषे दक्षिणाभेद उपयुज्यते। पूर्वं कर्तृत्वाधिष्ठानभूता एव वामनेन क्रीताः सन्त आग्नावैष्णवादित्रिकं कुर्युः। अमुनेन क्रीताः सन्तोऽभिषेचनीयमिति कर्तृत्वधर्मविशेषः। तस्मान्नियताः।

तृतीयाधिकरणमारचयति॥

अवेष्टावङ्गतन्त्रत्वं भेदो वा लिङ्गतोऽग्रिमः।
नोत्पत्तौ दक्षिणाभेदाल्लिङ्गं बाह्यप्रयोगगम्॥३॥

राजसूयप्रकरणे श्रूयते दिशामवेष्टयो भवन्तीति। तास्वावेष्टय उत्पत्तिवाक्यैरेव माम्नायन्ते। आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा ऐन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणेति। तास्ववेष्टिषु तन्त्रेणाङ्गानामनुष्ठानम्। कुतः। तल्लिङ्गात्। यदि ब्राह्मणो यजेत् बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेद्यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवमिति। तत्र मध्ये निधानं प्रयोगैक्ये लिङ्गम्। तदैक्याच्च तन्त्रमिति प्राप्ते ब्रूमः। उत्पत्तिगतेन दक्षिणाभेदेन प्रयोगभेदावगमादङ्गानां भेदः। लिङ्गं तु बहिः प्रयोगविषयम्। अस्ति च प्रयोगद्वयम्। राजसूयप्रकरणपाठादन्तः प्रयोग एकः। न च प्रकरणादुत्कर्षः कर्तुं शक्यः। राजसूयाङ्गभूतदिग्व्यवस्थापननिमित्तान्मादपरिहाररूपेणार्थवादेन तत्सम्बन्धावगमात्। तथा च श्रूयते। ईश्वरो वा एष दिशोऽनुन्मदितो यद्दिशोऽनुव्यवस्थापयति दिशामवेष्टयो भवन्ति। दिक्ष्वेव प्रतितिष्ठत्यनुन्मादायेति राजसूयाद्बहिः प्रयोगस्तेनयान्नाद्यकामं याजयेदिति विहितः। न चासौ राजसूया

न्तः पाती। यदि ब्राह्मणइत्यादिना इत्यादिना वर्णसंयोगाव गमात्। राजसूयेचब्राह्मण वैश्ययोरनधिकारात्। तस्माद्द्व द्धिःप्रयोगेऽङ्ग तन्त्रम् अन्तःप्रयोगे भेदइति निर्णयः॥

चतुर्थाधिकरणमारचयति॥

पवमानेष्टिहविषांतन्त्रभेदोऽथवाग्रिमः।
साध्यदेशाद्यभेदान्नोकाम्यभेदोक्तितोऽन्तिमः॥४॥

आधानप्रकरणे पठ्यते। अग्नये पवमानायाष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचयइति तैरनै हविर्भिःसाध्य स्याग्नेरेकत्वाद्देवयभेदाच्चाङ्गानां तन्त्रमिति प्राप्ते ब्रूमः। यःकामयेतोत्तरं वरीयान् श्रेयान् स्यामिति तस्याग्नये प वमानाय निरुप्याय पावकाय शुचये चोत्तरे हविषी समा नवर्हिषी निर्वपेदिति वचनात् काम्यप्रयोगे प्रथमस्य हवि षोऽङ्गभेदः उत्तरयोस्तन्त्रं नित्यप्रयोगेतु त्रयाणां तन्त्रम्॥

पञ्चमाधिकरणमारचयति॥

द्वादशाहे सदीक्षोपसदह्हे दिनमानकम्।
यत्तत्रषद्द्वादशवाषट्त्रिंशद्वाग्रिमोयतः॥५॥
एकैककर्मणोऽह्नोऽस्य ज्योतिष्टोमविकारतः।
एकैकतदनुष्ठानदिनानांपञ्चविंशति॥६॥
अह्नांद्वादशतात्रयन्यामध्यपक्षस्तदापिकिम्।
काम्येद्वादशसाद्यस्काद्यनुक्ताणासुतत्रिकम्॥७॥
एकैकस्यैवयागस्य विकृतित्वादिहाप्दिमः।
अमुख्यकालाङ्गबाधाच्च तुष्कं भिद्यतेत्रिधा॥८॥
दीक्षाउपसदः सुत्याःप्रत्येकंद्वादशस्मृताः।
सोऽह्न्यद्वादशाहस्यषट्त्रिंशद्दिवसामताः॥९॥

द्वादशाहस्यैकैकमहः पृथक्क्रमेतस्मिंश्च सदीक्षस्य सोपस त्कस्य ज्योतिष्टोमस्य विध्यन्तोऽतिदिष्टः। अतिदिष्टानामुपस दांदीक्षाणाञ्च साद्यस्कसंख्याबाधनाय पृथक् द्वादशाहं श्रुत म्। ततो दीक्षोपसदर्थे चतुर्विंशतिदिनानि सुत्यार्थमेकं दिन

मिति पञ्चविंशतिः ईदृशस्य कर्मविशेषस्याङ्गं द्वादशाभिवृत्तिभिः शतत्रयं स्यादित्याद्यः पक्षः। तथा सत्यङ्गं द्वादशत्वं श्रूयमाणं बाध्येत। तस्माद् द्वादश दिवसा इति मध्यमः पक्षः। तदापि दीक्षोपसद्भ्यां सङ्ख्यामुपेतस्यैवैकस्याह्नः साङ्गज्योतिष्टोमविकारत्वात् तत्सर्वं सद्यएव कर्त्तव्यमित्येकः पक्षः। प्रकृतौ दीक्षोपसदो मुख्यकालात् प्रागेवानुष्ठितत्वादिहापि तथैवानुष्ठानं प्राप्तं तत्र मुख्यकालेऽनुष्ठाने बाध्येत। तस्माद् द्व्यहस्य प्रधानस्य च द्वादशदिनानि विभज्यानुष्ठानमिति पक्षान्तरम्। द्वादशाहस्य द्वादशदीक्षा द्वादशोपसद इत्यङ्गयोर्मुख्यस्य च पृथक् द्वादशत्व श्रुत्या षट्त्रिंशदिति सिद्धान्तः॥ षष्ठाधिकरणमारचयति॥

सवनीयादिकं तत्र सकृत्स्याद्भिद्यतेऽथवा।
प्रयोगैक्यात्सकृन्नैवं मुख्यकाले विधानतः॥२०॥

तत्र द्वादशाहे सवनीयपश्वादिकमङ्गं दीक्षादिवत् सकृदेवानुष्ठेयम्। कुतः। द्वादशाहेन प्रजाकामं याजयेदिति प्रयोगैकत्वावगमादिति चेन्नैवम्। दीक्षादीनामन्यस्मिन् कालेऽनुष्ठेयत्वात् सवनीयादिकन्तु मुख्यकालेऽनुष्ठेयम्। अतो मुख्यकालानां भेदाद्भिद्यते॥

सप्तमाधिकरणमारचयति॥

उपसत्कालआह्वानं द्वादशाहे विकारभाक्।
नवाद्यउपसत्स्थत्वादन्त्राह्वाप्रकृताविव॥२१॥
सुत्यागमनमात्रस्य विवक्षाप्रकृतौ ततः।
विकारमन्तरेणात्र तन्सिध्येत्तेन तन्त्वता॥२२॥

उपसत्काले यत् सुब्रह्मण्याह्वानं प्रकृतावस्ति तत् द्वादशाहे चोदकप्राप्तं तस्य मुख्यकालादन्यः काल इति कृत्वा तन्त्रं पूर्वपादे पूर्वं निर्णीतम्। इदानीमन्योऽत्र ऊहरूपो विकारस्तत्त्वावाप पर्यवसायी विचार्यते। विकृतौ प्रथमोपसदिनमारभ्य त्रयोदशेऽह्नि प्रथमसुत्या चतुर्दशेऽह्नि द्विती-

यस्तुत्यन्येवं क्रमेणचतुर्विंशो ऽह्नि चरमस्तुत्याभवति।तथाच प्रकृतौ चतुरह इति संख्याविशिष्टेनाहःशब्देन स्तुत्याया उपलक्षितत्वात्।अत्रापि द्वादशानां स्तुत्यानामहःशब्देनोपलक्षणीयत्वे सति तद्विशेषणीभूतचतुःसंख्यास्थाने यथोचितं त्रयोदशचतुर्दशादिसंख्यानामूहनीयत्वेन विकारोभवति। ततोविशेषणभेदेन विशेष्यस्याहःशब्दस्यापि द्वादशकृत्व आवृत्तावर्थात् सुब्रह्मण्याह्वानस्यावापःस्यादिति प्राप्ते ब्रूमः। प्रकृताविन्द्रस्य स्तुत्यागमनमात्रं विवक्षितम्। चतुरहत्वमर्थप्राप्तमनूद्य तत उभयविवक्षायांस्तुत्यामागच्छ चतुरह आगच्छेति वाक्यं भिद्येत। तथात्रापि त्रयोदशाहे स्तुत्यामागच्छेत्येवंविधं विकारमन्तरेण चतुरहे स्तुत्यामागच्छेत्येवाह्वाने ऽपि चतुरहशब्दस्याविवक्षितार्थत्वात् स्तुत्याकारेण द्वादशानामेकत्वादशेषस्तुत्यागमनं सिध्यति। तस्मादूहरूपविकाराभावात्। पूर्वोक्ततन्त्रं सुस्थितम्॥ अष्टमाधिकरणमारचयति॥

प्राजापत्येषुकुम्भ्यादेर्भेदोनोवाङ्गभेदतः।
भेदोनैवंविशेषाङ्गश्रपणादौ प्रभुत्वतः॥८॥

वाजपेये सप्तदश प्राजापत्यपशुषु कुम्भ्या हृदयशूलस्य वपाश्रपण्याश्च भेदस्यात्। ननु पश्वङ्गानां भिन्नत्वात् मैवम्। पश्वङ्गानां बहुत्वेपि प्रौढकुम्भ्यादेरेकार्थे श्रपणादौ प्रभुत्वात् तस्मात्तन्त्रम्॥

नवमाधिकरणमारचयति॥

किमैकादशिनेषस्यकुम्भ्यादेर्भिन्नतानवा।
असन्देहायभेदोनलिङ्गादेवास्यसिद्धितः॥९॥

भिन्नदेवताकेष्वैकादशिनेषु पशुष्वेककुम्भिपाके सति किमङ्गं कां देवतां प्रत्युपाकृतस्य पशोः सम्बन्धीति सन्देहे सति प्रदाने सङ्कीर्येत तम्। तस्मात् कुम्भ्यादेरावापइति चेत् मैवम्। चिह्नकरणमात्रेणैव सन्देहापगमसिद्धेः। ला

घवान्।तस्मात्तत्रापि तन्त्रम्॥

दशमाधिकरणमारचयति॥

तन्त्रं हेयमुत नो चिन्हनास्ति वसास्वतः।
हेयं नोऽप्रतिपत्तित्वात्साङ्कर्येणाप्यदोषतः॥१०॥

एकादशिनेषु कुम्भ्यादेर्यत्तन्त्रं निर्णीतं तत्परित्याज्यं कुतः
।अङ्गानामिव वसानां चिन्हकरणासम्भवेन साङ्कर्यप्रसङ्गा
त्।नैवम्।वसाहोमस्य प्रतिपत्तिकर्मत्वेन द्रव्यं प्रतिप्रयोज
कत्वाभावेन द्रव्यश्रपणार्थं कुम्भीभेदप्रयोजकत्वस्य दुरापे
तत्वात्।नचात्र द्रव्यसाङ्कर्यं दोषाय भवति।व्यवस्थापकप्रमा
णाभावात्।ननु तत्तद्देवताविषययाज्याद्युच्चारणेषु भिन्ना हो
माः पूर्वं निर्णीताः।बाढम्।तथैवाद्युच्चारणेन तद्दूषणम्।कि
मायातं द्रव्यसाङ्कर्ये।तस्मात् कुम्भ्यादेस्तन्त्रं न त्याज्यम्॥

एकादशाधिकरणमारचयति॥

भिन्नजातिषु कुम्भ्यादेस्तन्त्रं भेदोऽथवाग्रिमः।
पूर्ववत्पाकवैषम्ये साहित्यासम्भवाद्भिदा॥११॥

एकजातिषु पशुषु यथा कुम्भ्यादेस्तन्त्रं पूर्वोक्तं तथात्रापी-
ति चेत् नैवम् अवेरङ्गानि सहसा पच्यन्ते अजाङ्गानि विल
म्बेन ततः साहित्यासम्भवात्।कुम्भ्यादेर्भेदः॥

द्वादशाधिकरणमारचयति॥

तन्त्रं चतुष्कपालानां भेदो वा तन्महत्त्वतः।
कुम्भीवत्तन्त्रतामेवं भेदः स्यात्प्रकृताविव॥१२॥

इदं श्रूयते यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतु
ष्कपालान्निर्वपेदिति।यथा प्राजापत्येषु कुम्भ्या महत्त्वेन त
न्त्रं तथात्रापि तन्त्रमिति चेत् नैवम्।प्रकृतौ प्रतिपुरोडाशं
कपालभेदेन तद्वदस्यैव चोदकप्राप्तेः।किं चात्यन्तविशालेषु
कपालेषु चतुर्षु पुरोडाशानां शतेषु व्यवस्थापितेष्वेकस्यैव-
कपालस्यैकदेशे पुरोडाशस्यैकस्य समाप्तेर्नैकोऽपि पुरोडाश
श्चतुष्कपालः सिध्येत्। तस्मात् प्रतिपुरोडाशं कपालचतुष्क-

भेदः॥ त्रयोदशाधिकरणमारचयति॥

अवघातार्थमन्त्रः किमसकृत्सकृदेव वा।
प्रहारभेदादावृत्तिः कर्मैक्येन सकृद्भवेत्॥२३॥

अवरक्षो दिवः सपत्नं वध्यासमित्यवहननीयमवघाते विहिते मन्त्र आवर्तनीयः। अवघातस्य प्रहाररूपत्वात् प्रहाराणाञ्च भिन्नत्वादिति प्राप्ते ब्रूमः। तण्डुलनिष्पत्तिपर्य्यन्तत्वेनाक्षिप्तप्रहाराभ्याससुक्तस्यावघातस्यैककर्मत्वात्। तत्र विनियुक्तस्य मन्त्रस्यावघातोपक्रमे सकृदेव पाठः॥

चतुर्दशाधिकरणमारचयति॥

नानाबीजेषु तन्मन्त्रः सकृद्वासकृदग्रिमः।
विशेषाग्रहणान्नैवमवघातस्य भेदतः॥२४॥

राजसूये नानाबीजेऽष्टौ बीजानामवघातस्याङ्गभूतो मन्त्रोऽयमेनदर्शयइति विशेषस्यागृह्यमाणत्वात् सकृदादौ प्रयोज्य इति चेत् नैवम्। अवघातानां भिन्नत्वेन समन्त्रत्वाय प्रत्यवघातं मन्त्रस्यावर्त्तनीयत्वात्॥

पञ्चदशाधिकरणमारचयति॥

निर्वापादिषु तन्मन्त्राः सकृद्भेदेन वाग्रिमः।
द्रव्यकर्मैक्यतो नैवं संस्कारस्य पृथक्त्वतः॥२५॥

दर्शपूर्णमासयोर्निर्वापबर्हिर्लवनवेदिपरिस्तरणाज्यग्रहणेष्वावृत्तयः श्रुताः। चतुरो मुष्टीन्निर्वपति। अपरिमितान् मुष्टीँल्लुनाति त्रिधातु पञ्चधातु वा वेदिं स्तृणाति। चतुर्जुह्वां गृह्णातीति। तेषु निर्वापादिमन्त्रा विहिताः देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि। बर्हिर्देवसदनं दामि। ऊर्णाम्रदसं त्वा स्तृणामि। शुक्रं त्वा शुक्रायां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामीति च तन्मन्त्राः। द्रव्यैक्यात् कर्मैक्याच्च शास्त्रावघातन्यायेन सकृत्याज्या इति प्राप्ते ब्रूमः। समन्त्रकप्रथममुष्टिनिर्वापेण ये संस्कृतास्तण्डुलास्तेभ्योऽन्ये मुष्ट्यन्तरनिर्वापेण संस्कार्य्या अतस्तत्संस्का

रसिद्धये नानाबीजन्यायेन मन्त्रावृत्तिरेवं लवनादिषु योज्यम्॥ षोडशाधिकरणमारचयति॥

वेदिप्रोक्षणमन्त्रः किमावर्त्यः सकृदेव वा।
आद्यः स्यात्प्रोक्षणत्रित्वात्संस्कार्य्यैकत्वतः सकृत्॥२१॥

आग्नेः स्यात्प्रोक्षणत्रित्वात्संस्कार्य्यैकत्वतः सकृत्॥ वेदिर्वेद्यास्त्रिः प्रोक्षणं विहितम्। तत्र मन्त्र आम्नायते। वेदिरसि बर्हिषे त्वेति। तत्र त्रिः प्रोक्षणक्रियाया आवृत्त्यात्मन्त्रस्याप्यावृत्तिरिति चेत्। मैवम्। संस्कार्य्यवेद्या एकत्वेन समन्त्रकप्रथमप्रोक्षणे तत्संस्कारसिद्धौ पुनर्मन्त्रवैयर्थ्यात्। प्रोक्षणावृत्तिस्तु वाचनिकीति वैषम्यम्॥

सप्तदशाधिकरणमारचयति॥

एककालीनबह्वङ्गकण्डूमन्त्रे भिदा न वा।
अङ्गभेदान्मन्त्रभेदो नित्त्वैकत्वतो न स॥२२॥

ज्योतिष्टोमे कृष्णविषाणया कण्डूयनमिति प्रोक्तसाधनोपेतेषु कण्डूयनेषु सुपिप्पलाभ्यस्त्वौषधीभ्य इत्यादिको मन्त्रो विहितस्तत्र युगपद्बह्वङ्गेषु उत्पन्नाया कण्ड्वा प्रत्यङ्गमभ्यस्यमाने कण्डूयनेऽभ्यासः कर्त्तव्यः। कुतः। कण्डूयितव्यानामङ्गानां भिन्नत्वादिति प्राप्ते ब्रूमः। न ह्यङ्गशेषो मन्त्रः। येन तद्भेदमभ्यसेत्। किन्तु कण्डूनिवृत्तये यत्प्राप्तं कण्डूयनं तदेव कृष्णविषाणादिविशिष्टत्वाकारेण विधीयते। विधीयमानस्य तस्य कण्डूयनस्य शेषोऽयं मन्त्रः। तेन च कण्डूयने नात्मनि निर्दुःखत्वलक्षणः संस्कारः उत्पाद्यते। ततः संस्कार्य्यात्मन एकत्वात् सकृन्मन्त्रपाठेन तत्सिद्धेर्नाववघातवन्मन्त्रस्यावृत्तिः। कण्डूयनन्तु दृष्टप्रयोजनपर्य्यन्तं प्रत्यङ्गं नानाबीजावघातवदावर्त्तताम्। तस्मात् सकृदेव कण्डूयनमन्त्रः॥

अष्टादशाधिकरणमारचयति॥

स्वप्नादिमन्त्र आवर्त्यो नो वाद्योऽस्त्वन्तरायतः।
कृत्स्नोद्देशप्रवृत्तत्वान्निमित्ताभेदतः सकृत्॥२३॥

दीक्षितस्य स्वप्नवद्नतरणवृष्टिक्लेदनामेध्यदर्शननिमित्ता-

